प्रथममेव—इससे मालूम पडता है कि वह समय प्रात काल का था। सवेरे सांप देखने से असगुन होता है। इसलिये राक्षस उसे हटाने को कहता है। परितोष्य—सतुष्ट करके। परि√तुष्+णिच्+क्त्वा—ल्यप्। प्रसाद करोति—प्रसन्नता प्रकट करते हैं, इनाम देते हैं। प्राकृतकवि —काव्यादश के अनुसार सस्कृत से निकली हुई अनेक भाषाओं का नाम सामान्यतया प्राकृत है। प्राकृतषु कवि प्राकृतकवि सुप्सुपा स०।

राक्षस —[ पत्र गृहीत्वा वाचयति। ]

पाऊण णिरवसेस कुसुमरस अत्तणो कुसलदाए।
ज उग्गिरेइ भमरो त अण्णाण कुणइ कज्ज ॥ ११ ॥

(पीत्वा निरवशेष कुसुमरसमात्मन कुशलतया।
यदुद्गिरति भ्रमरस्तदन्येषा करोति कार्यम् ॥ )

अन्वय —आत्मन कुशलतया निरवशेष कुसुमरस पीत्वा भ्रमर यद् उद्गिरति तत् अन्येषा कार्यं करोति ॥ ११ ॥

व्याख्या—आत्मन —स्वस्य, कुशलतया—नपुण्येन, निरवशेष—समग्र, कुसुमरस—कुसुमस्य पुष्पस्य रस मधु (पक्षान्तरे कुसुमस्य कुसुमपुरस्य रस वृत्त), पीत्वा—सगीय ( पक्षान्तरे ज्ञात्वा ), भ्रमर —मधुकर ( पक्षान्तरे चर ) यत्—मधु ( पक्षान्तरे वृत्तम् ), उद्गिरति—वहिर्नि सारयति (पक्षान्तरे कथयति), तत्—मधु ( पक्षान्तरे वृत्तम् ), अन्येषा—मनुष्याणा ( पक्षान्तरे चरनियोक्तृणा, कार्यं—कृत्य, करोति—साधयति ॥ ११ ॥

हिन्दी अनुवाद—राक्षस—[ पत्र लेकर बाचता है। ]

अपनी निपुणता से सम्पूर्ण पुष्प-रस का पान करके ( पक्षान्तर मे कुसुमपुर का समाचार जानकर ) भौंरा ( पक्षान्तर म गुप्तचर ) जो उगिलता है (पक्षान्तर मे कहता है ), वह ( मधु पक्षान्तर मे कथन ) दूसरो का कार्य सिद्ध करता है ॥ ११ ॥

टिप्पणी—निरवशेषम्—नि नास्ति अवशेषो यत्र तत् निरवशेषम् तत् यथा तथा। यह 'पीत्वा' क्रिया का विशेषण है। भ्रमर —भौरा। भ्रमर इव आचरति इति भ्रमरति। तत पचाद्यचि=भ्रमर भ्रमरसदृशाचरणकर्ता गुप्तचर।

इस पद्य में अप्रस्तुतप्रशंसा अलंकार है, वैदर्भी रीति है, प्रसाद गुण है और आर्या छन्द है। आर्या का लक्षण १,५ में देखिए ॥ ११ ॥

**राक्षसः**—[ आत्मगतम् ] अये ! कुसुमपुरवृत्तान्तज्ञः अहं भवत्प्रणिधिश्चेति गाथार्थः। आः कार्यव्यग्रत्वात् मनसः प्रभूतत्वाच्च प्रणिधीनां विस्मृतम्, इदानीं स्मृतिरुपलब्धा। व्यक्तम् आहितुण्डिकच्छद्मना कुसुमपुरादागतेन विराधगुप्तेनानेन भवितव्यम्। [ प्रकाशम् ] प्रियंवदक ! प्रवेशय एनं, सुकविः एषः श्रोतव्यमस्मात् सुभाषितम्।

**प्रियंवदकः**—जं अज्जो आणवेदि त्ति। [ आहितुण्डिकमुपसृत्य ] उपसप्पदु अज्जो। ( यदार्य आज्ञापयतीति। उपसर्पत्वार्यः )।

**आहितुण्डिकः**—[ नाट्येनोपसृत्यावलोक्य च संस्कृतमाश्रित्य स्वगतम्। ] अये ! अयममात्यराक्षसस्तिष्ठति। स एषः—

वामां वाहुलतां निवेश्य शिथिलं कण्ठे निवृत्तानना
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः।
गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशङ्किनी
मौर्यस्योरसि नाधुनाऽपि कुरुते वामेतरं श्रीः स्तनम् ॥ १२ ॥

**व्याख्या**—कुसुमपुरवृत्तान्तज्ञः—पाटलिपुत्रवृत्तान्तज्ञाता, अहं, भवत्प्रणिधिः—भवतः तव प्रणिधिः दूतः, इति, गाथार्थः—गाथायाः आर्याछन्दसा परिणद्धाया गीतिकाया अर्थः तात्पर्यम्। मनसः—चित्तस्य, कार्यव्यग्रत्वात्—कार्येषु कृत्येषु व्यग्रः आकुलः तस्य भावः तस्मात्, प्रणिधीना—चराणां, प्रभूतत्वाच्च—आधिक्याच्च, विस्मृतम्। इदानीम्—अधुना, स्मृतिः—स्मरणम्, उपलब्धा—प्राप्ता। व्यक्तम्—स्पष्टम्, आहितुण्डिकच्छद्मना—व्यालोपजीविमिषेण, विराधगुप्तेन, अनेन—चरेण, भवितव्यम्—भाव्यम्। एषः, सुकविः—सुपण्डितः, अस्मात्—सुकवेः, सुभाषितं—सुवाक्यं, श्रोतव्यम्—आकर्णनीयम्।

**अन्वयः**—यस्य उद्यमाशङ्किनी श्रीः वामां वाहुलतां कण्ठे शिथिलं निवेश्य निवृत्तानना बलात् स्कन्धे निहितया अपि मुहुः अङ्के पतन्त्या दक्षिणया गाढालिङ्गनसङ्गपीडितमुखं वामेतरं स्तनम् अधुनापि मौर्यस्य उरसि न कुरुते ॥ १२॥

**व्याख्या**—यस्य—राक्षसस्य, उद्यमाशङ्किनी—उद्योगभीता, ( सती ),

व्याख्या—शरासनधरै —धनुर्धरै , प्राकार—प्राचीर, परित —समन्तात्, क्षिप्र—शीघ्र , परिक्रम्यताम् । प्रतिद्विपघटाभेदक्षमै —प्रतिपक्षा ये द्विपा गजा तेषा घटाया सघातस्य भेदे विघटने क्षमै समर्थै , द्विरदै —हस्तिभि , द्वारेषु—तोरणेषु, स्थीयताम् । येषाम्—अस्मद्वीराणा, यश —कीर्ति , अभीप्टम्—अभीप्सितम्, ते, मृत्युभय—मरणभीति, त्यक्त्वा—मुक्त्वा, दुर्बले—हीनबले, शत्रोर्बले—रिपो सैन्ये, एकमनस —एकचित्ता ( भूत्वा ),प्रहर्तुमनस —जिघा-सव ( सन्त ), मया—राक्षसेन, सह—सार्घ, निर्यान्तु—वहिरागच्छन्तु ॥१३॥

हिन्दी अनुवाद—राक्षस—[ शस्त्र ( तलवार ) खींचकर हडवडी के साथ ] मेरे रहते कौन कुसुमपुर को घेरेगा ? प्रवीरक ! प्रवीरक ! अभी तुरन्त—

धनुर्धर ( सैनिक ) परकोट की चारो ओर शीघ्र चक्कर लगावे, शत्रुओ के हाथियो के समूह को तितर-बितर करने मे समर्थ हाथी द्वारो पर खडे हो जायँ । जिन्हे यश की चाह है, वे मरने का भय त्यागकर दुर्बल शत्रु-सेना पर एक मन से प्रहार करने की इच्छा वाले होकर मेरे साथ बाहर निकल आवे ॥१३॥

टिप्पणी—उपरोत्स्यति—घेरेगा । उप√रुध्+लृट्—स्यति । अत्र 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' इति सूत्रेण भूते लृट् । प्रवीरक—यह राक्षस के तत्कालीन अनुचर का नाम है । शरासनधरै —धनुर्धारी योद्धा । शरा अस्यन्ते क्षिप्यन्ते यै तानि शरासनानि शर√अस्+ल्युट् करणे ।धरन्तीति धरा √धृ+अच्, शरासनना धरा शरासनधरा , तै अनुक्ते कर्तरि तृतीया । प्राकारम्—चहारदीवारी । प्रक्रियते इति प्र√कृ+घञ् कर्मणि, उपसर्गस्य दीर्घ =प्राकार , तम् । यहाँ 'परित ' के योग मे द्वितीया हुई । प्रतिद्विपघटाभेदक्षमे —प्रतिद्वन्द्वी हाथियो केसमूह को छिन्न-भिन्नकरने मे समर्थ। घटनम् इति√घट्+अङ् भावे= घटा । 'घटा घटनगोष्ठीभघटनासु च योषिति' इति मेदिनी । येषाम्अभीप्टम्—अभि√इष्+क्त कर्मणि वर्तमाने 'मतिवुद्धिपूजार्थेभ्यश्च' इत्यनेन । येषाम् इत्यत्र 'क्तस्य च वर्तमाने' इति सूत्रेण षष्ठी ।दुर्बले—दु स्थितानि बलानि अस्य इति दुर्बलम्, तस्मिन्।एकमनस —अभिन्नहृदय।प्रहर्तुमनस —प्रहार करने की इच्छा रखने वाले। प्रहर्तुम् मन एषाम् इति प्रहर्तुमनस 'तुम्काममनसोरपि' इति मकारलोप । इस पद्य मे स्वभावोक्ति अलकार और काव्यलिंग अलकार की ससृष्टि है । इसमे वीर

रस है, स्थायी भाव है, गौडी रीति है, ओज गुण है और शार्दूलविक्रीडित छन्द है। इस छन्द का लक्षण १, १२ में देखिए ॥१३॥

**विराधगुप्तः**—अमात्य ! अलमावेगेन। वृत्तमिदं वर्ण्यते।

**राक्षसः**—[निःश्वस्य] कष्टं वृत्तमिदम्। मया पुनर्ज्ञातं स एव कालो वर्तते इति। [ शस्त्रमुत्सृज्य सास्रम् ] हा देव नन्द ! स्मरामि ते राक्षसम्प्रति प्रसादातिशयम्। यस्तु एवंविधकाले—

यत्रैषा मेघनीला चरति गजघटा राक्षसस्तत्र याया-
देतत् पारिप्लवाम्भःप्लुति तुरगबलं वार्यतां राक्षसेन।
पत्तीनां राक्षसोऽन्तं नयतु बलमिति प्रेषयन्मह्यमाज्ञा-
मज्ञासीः स्नेहयोगात् स्थितमिव नगरे राक्षसानां सहस्रम् ॥१४॥

अन्वयः—यत्र एषा मेघनीला गजघटा चरति तत्र राक्षसः यायात्, पारिप्लवाम्भःप्लुति एतत् तुरगबलं राक्षसेन वार्यताम्, पत्तीनां बलं राक्षसः अन्तं नयतु इति मह्यम्, आज्ञां स्नेह-योगात् नगरे राक्षसानां सहस्रम् इव स्थितम् अज्ञासीः ॥१४॥

**व्याख्या**—यत्र—यस्मिन् समरमुखे, एषा—बुद्धिस्था, मेघनीला—अभ्रश्यामा, गजघटा—करिसंहतिः, चरति—संग्रामार्थं भ्रमति, तत्र—रणप्रदेशे, राक्षसः—नन्दामात्यः, यायात्—गच्छेत्, पारिप्लवाम्भःप्लुति—पारिप्लवं चञ्चलम् द्रुतं प्रसरत् इति यावत् यत् अम्भः जलं तस्य प्लुतिः उत्प्लवनमिव प्लुतिः यस्य तादृशम्, एतत्—दृश्यमान, तुरगबलम्—अश्वसैन्यं, राक्षसेन, वार्यताम्—निवर्त्यताम्, पत्तीनां—पदातीनां, बलं—सैन्यं पराक्रम वा, राक्षसः, अन्त—नाशं, नयतु—प्रापयतु, इति—इत्थम्, मह्यम्—मां प्रति, आज्ञा—नियोग, प्रेषयन्—प्रेरयन् कुर्वन्निति यावत्, स्नेहयोगात्—प्रीतिसम्पर्कात्, नगरे—कुसुमपुरे, राक्षसानां सहस्रम् इव, स्थितम्—युद्धाय सन्नद्धम्, अज्ञासीः—अमंस्थाः ॥ १४ ॥

**हिन्दी अनुवाद**—विराधगुप्त—अमात्य ! आवेग मे न आइए। यह तो समाचार का वर्णन किया जा रहा है।

**राक्षस**—[ आह खींचकर ] यह समाचार कष्टदायक है। मैंने तो समझा कि वही समय है। [ **हथियार छोड़कर आँसू के साथ** ] हा महाराज नन्द ! मैं

आपकी राक्षस के प्रति अत्यन्त कृपा का स्मरण करता हूँ। जो (आप) ऐसे समय मे—

जहाँ ( समरागण मे ) ऐसी बादल-सी नील वर्ण वाली गज-पक्ति घूम रही है, वहाँ ( उसको विनष्ट करने के लिए ) राक्षस जावे, तेजी से बहते हुए जल की गति के समान गतिवाली अश्व-सेना को राक्षस रोके और पैदलो की सेना को राक्षस विनष्ट करे—इस प्रकार मुझे आज्ञा देते हुए प्रीति के कारण नगर मे हजारो राक्षसो के समान स्थित ( मुझ ) मानते थे ॥१४॥

टिप्पणी—आवेगेन—क्रोधेन । अल—पर्याप्तम् । सास्रम्—अश्रुपूर्णनेत्र यथा स्यात् तथा । क्रियाविशेषणत्वात् द्वितीया नपुसकत्व च । प्रमादातिशयम्—प्रसादस्य प्रसन्नताया अतिशयम् आधिक्यम् । मेघनीला—मेघ इव नीला 'उपमानानि सामान्यवचनै' इत्यनेन उपमितसमास । गजघटा—दे० श्लोक १३ की टिप्पणी । पत्तीनाम्—पैदलो । पद्यन्ते इति √पद्+क्तिच् वा औणादिक क्ति कर्तरि=पत्तय , तेषाम् । 'पदातिपत्तिपदगपादातिकपदाजय' इत्यमर । मह्यम्—अत्र 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' इत्यनेन सम्प्रदानसज्ञा—चतुर्थी । इस पद्य मे लुप्तोपमा अलकार वाच्योत्प्रेक्षा अलकार के साथ ससृष्ट है । इसमे ओज गुण है, लाटी रीति है और स्रग्धरा छन्द है । इस छन्द का लक्षण ?, ? मे देखिए ॥१४॥

ततस्तत ?

विराधगुप्त —तत समन्तादुपरुद्ध पुष्पपुरमवलोक्य, बहुदिवसप्रभृति महदुपरोधवैशसमुपरि पौराणा परिवर्तमानमसहमाने, तस्यामप्यवस्थाया पौरजनापेक्षया सुरङ्गामेत्यापक्रान्ते तपोवनाय देवे सर्वार्थसिद्धौ, स्वामिविरहात् सुशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु, जयघोषणाव्याघातादिसाहसानुमितान्तर्नगवासिषु, पुनरपि नन्दराज्यप्रत्यानयनाय सुरङ्गया बहिरपगतेषु युष्मासु चन्द्रगुप्तनिधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि पर्वतेश्वरे—

व्याख्या—तत —तदनन्तर, समन्तात्—चतुर्दिक्षु, उपरुद्ध—सैन्याक्रान्त, कुसुमपुरम्, अवलोक्य—दृष्ट्वा, बहुदिवसप्रभृति—अनेकवासरान् यावत्, पौराणा—नागरिकाणाम्, उपरि, महत्—बहुलम्, परिवर्तमान—प्रतिदिनवृत-

नम्, उपरोधवैशसम्—उपरोधेन अवरोधेन वैशसम् अत्याचाररूपघातुककर्म, असहमाने—अमृष्यमाणे, तस्यामप्यवस्थायाम्—असहमान-दशायामपि, पौर-जनापेक्षया—पौरजनेषु या अपेक्षा आदरः तया, सुरङ्गाम्—कञ्चित् बिलमार्गम्, एत्य—प्राप्य, तपोवनाय—तपोवनं गन्तुं, देवे—राज्ञि, सर्वार्थसिद्धौ, अपक्रान्ते—अपसृते (सति), स्वामिविरहात्—प्रभुविच्छेदात्, सुशिथिलीकृतप्रयत्नेषु—मन्दीकृतोद्योगेषु, युष्मद्बलेषु—भवत्सैन्येषु, जयघोषणाव्याघातादिसाहसानुमितान्तर्नगरवासिषु—जयस्य घोषणा डिण्डिमाघातपूर्वकविज्ञापनम् तस्या व्याघातः अकरणम् स आदिर्येषां तैः साहसैः साहसिककार्यैरित्यर्थः अनुमितेषु नन्दानुरक्ता एते इति ज्ञातेषु (सत्सु) अन्तर्नगरवासिषु—पुराभ्यन्तरवासिषु, पुनरपि—भूयोऽपि, नन्दराज्यप्रत्यानयनाय—नन्दभूपराज्यायत्तीकरणाय, सुरङ्गया—गुप्तमार्गेण, वहिरपगतेषु—बाह्यप्रदेश गच्छत्सु, युष्मासु—भवत्सु, चन्द्रगुप्त-निधनाय—वृपलनाशाय, युष्मत्प्रयुक्तया—भवत्प्रेरितया, विषकन्यया—विषाक्तबालया, तपस्विनि—वराके निरपराधे इत्यर्थः, पर्वतेश्वरे, घातिते—विनाशिते (सति),—

**हिन्दी अनुवाद**—तब तब ?

**विराधगुप्त**—तब चारो ओर से कुसुमपुर को घिरा हुआ देखकर नागरिकों के ऊपर बहुत दिनों से चलने वाले घेरे से उत्पन्न नये-नये घोर अत्याचार को न सह सकते हुए महाराज सर्वार्थसिद्धि के उस अवस्था मे भी नागरिकों के आदर से सुरंग के रास्ते तपोवन के लिए भाग जाने पर, स्वामी के अभाव के कारण आपके सैनिकों के प्रयत्नों मे ढीले पड़ जाने पर (चन्द्रगुप्त की) विजय-घोषणा में की गई विघ्नबाधा आदि साहसिक कार्यो से नगर के अन्दर रहने वाली जनता की मनोवृत्ति का पता चल चुकने पर, पुनः नन्द के राज्य को लौटा लाने के लिए सुरंग के द्वारा आपके बाहर चले जाने पर, चन्द्रगुप्त की हत्या के लिए आपके द्वारा प्रयुक्त विषकन्या से बेचारे पर्वतेश्वर के मार दिये जाने पर—

**टिप्पणी**—उपरोध—उप √ रुध् + घञ् भावे = उपरोधः। वैशसम्—क्रूरता। विशसस्य भावः वैशसम् विशस + अण् भावे। पौरजनापेक्षया—पौरजनेषु अपेक्षा सुप्सुपा स०, तया। हेतौ तृतीया। तपोवनाय—तपोवनं गन्तुम्। अत्र 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रेण कर्मणि चतुर्थी।

साहस—बल या हठ से किया जाने वाला कार्य। सहसा कृतम् इति सहस—अण्।

राक्षस—सखे! पश्याश्चर्यम्—

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता
हन्तुं शक्तिरिवार्जुनं बलवती या चन्द्रगुप्तं मया।
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तिकश्रेयसे
हैडिम्बेयमिवेत्य पर्वतनृपं तद्वध्यमेवावधीत् ॥ १५ ॥

अन्वय—कर्णेन इव मया अर्जुनम् इव चन्द्रगुप्तम् हन्तुम् बलवती एकपुरुषव्यापादिनी शक्ति (इव) या विषाङ्गना रक्षिता, सा विष्णो इव विष्णुगुप्तहतकस्य आत्यन्तिकश्रेयसे तद्वध्यम् हैडिम्बेयमिव पर्वतनृपम् एव एत्य अवधीत् ॥ १५ ॥

व्याख्या—कर्णेन इव—राधेयेन इव, मया—राक्षसेन, अर्जुनम् इव—गाण्डीविनम् इव, चन्द्रगुप्तम्, मौर्यम्, हन्तुम्, मारयितुम्, बलवती—प्रबला, एकपुरुषव्यापादिनी—एकम् एकमेव पुरुष जन व्यापादयति हन्ति या तादृशी, शक्ति—इन्द्रप्रदत्तशक्तिनामास्त्रविशेष (एकघ्नी इव), या विषाङ्गना—विषकन्या, रक्षिता—स्थापिता, सा, विष्णो इव—भगवत इव, विष्णुगुप्तहतकस्य—चाणक्यस्य, आत्यन्तिकश्रेयसे—अधिककल्याणाय, तद्वध्यम्—तस्य विष्णो पक्षान्तरे तस्य चाणक्यस्य वध्य घात्य, हैडिम्बेयम् इव—हिडिम्बासुत घटोत्कचमिव, पर्वतनृपम्—पर्वतकम्, एव, एत्य—प्राप्य, अवधीत्—विनाशितवती ॥१५॥

हिन्दी अनुवाद—राक्षस—मित्र! आश्चर्य तो देखो—

कर्ण के समान मैंने अर्जुन के समान चन्द्रगुप्त को मारने लिये प्रबल तथा एक ही व्यक्ति का वध करने वाली शक्ति (बाणविशेष) के समान जिस विषकन्या को रख छोड़ा था, उसने विष्णु के समान दुष्ट चाणक्य के अत्यत कल्याण के लिये विष्णु के वध्य (पक्षान्तर में चाणक्य के वध्य) घटोत्कच के समान राजा पर्वतक को ही प्राप्त करके मार दिया॥ १५ ॥

टिप्पणी—पश्य—समझो, क्योंकि दृश् धातु का प्रयोग ज्ञान अर्थ मे भी किया जाता है। एकपुरुषव्यापादिनी—एक पुरुष कर्मधारय स०, तम्

व्यापादयति इति एकपुरुष—वि—आ√पद्+णिच्+णिनि कर्तरि साधुकारिणि आवश्यके वा। यह 'विपाङ्गना' और 'शक्तिः' दोनों का विशेषण है। विष्णोः—कृष्ण। विष्णुगुप्तहतकस्य—हत एव हतकः हत+क स्वार्थे। विष्णुगुप्तश्चासौ हतकश्च 'कुत्सितानि कुत्सनैः' इति समासः। आत्यन्तिकश्रेयसे—नित्य या सार्वकालिक कल्याण के लिये। अत्यन्ते भवम् आत्यन्तिकम् अत्यन्त+ठञ्—इक। आत्यन्तिकम् श्रेयः कर्मधारय स०, तस्मै। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रेण कर्मणि चतुर्थी। हैडिम्बेयम्—घटोत्कच। हिडिम्बायाः अपत्यं पुमान् इति हिडिम्बा+ढक्—एय=हैडिम्बेयः, तम्। इस पद्य में विषमालंकार पूर्णोपमा अलंकार से संकीर्ण है। इसमें वैदर्भी रीति है, माधुर्य गुण है और शार्दूलविक्रीडित छन्द है। इस छन्द का लक्षण १, १२ मे देखिये ॥ १५ ॥

विराधगुप्तः—अमात्य ! दैवस्यात्र कामचारः, किमत्र क्रियते ?

राक्षसः—ततस्ततः ?

विराधगुप्तः—ततः पितृवधपरित्रासादपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ, विश्वासिते च पर्वतकभ्रातरि वैरोचके, प्रकाशिते च चन्द्रगुप्तस्य नन्दभवनप्रवेशे, चाणक्यहतकेनाहूयाभिहिताः कुसुमपुरनिवासिनः सर्वे एव सूत्रधाराः यथा—'सावत्सरिकवचनादद्यैवार्धरात्रसमये एवाभिमतः चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, ततः प्रथमद्वारात्प्रभृति संस्क्रियतां राजभवनम्' इति। ततः सूत्रधारैरभिहितम्—'आर्य ! प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशमुपलभ्य सूत्रधारेण दारुवर्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं प्रथमराजद्वारम्। इदानीमस्माभिरभ्यन्तरे संस्कारो विधेय.' इति। ततश्चाणक्यवटुना, अनादिष्टेनैव दारुवर्मणा संस्कृतं राजभवनद्वारमिति परितुष्टेनेव, दारुवर्मणः सुचिरं दाक्ष्यमभिनन्द्याभिहितम्—'अचिरादस्य दाक्ष्यस्यानुरूपं फलमधिगमिष्यिसि दारुवर्मन् !'

व्याख्या—दैवस्य—भाग्यस्य, कामचारः—स्वेच्छा। पितृवधपरित्रासात्—पितुः तातस्य वधः नाशः तस्मात् परित्रासः भयम् तस्मात्, कुसुमपुरात्—पाटलि-

पुत्रात्, कुमारे, मलयकेतौ, अपक्रान्ते—पलायिते, पर्वतकभ्रातरि—पर्वतकसोदरे, वैरोचके, विश्वासिते—आश्वासिते च, चन्द्रगुप्तस्य—मौर्यस्य, नन्दभवनप्रवेशे—नन्दभूपगृहसन्निवेशे, प्रकाशिते—प्रख्यापिते च, चाणक्यहतकेन, आहूय—आकार्य, सर्वे—समे, कुसुमपुरनिवासिन —पाटलिपुत्रवास्तव्या , सूत्रधारा —शिल्पिन , अभिहिता —कथिता , सांवत्सरिकवचनात्—दैवज्ञवाक्यात्, अद्यैव—अस्मिन्नेव, अर्धरात्रसमये—निशार्धसमय, एव, चन्द्रगुप्तस्य, नन्दभवनप्रवेश —नन्दगृहसन्निवेश , अभिमत —अभीष्ट , भविष्यति । तत —तदनन्तर, प्रथमद्वारात् प्रभृति—पूर्वद्वारमारभ्य, राजभवन—राजप्रासाद , सस्क्रियताम्—सस्कारयुक्त विधीयताम् । तत —तत्पश्चात्, सूत्रधारै , अभिहितम्—कथितम्, आर्य—पूज्य, देवस्य—महाराजस्य, चन्द्रगुप्तस्य, प्रथममेव—प्रागेव, नन्दभवनप्रवेशम्—नन्दभूपगृहसन्निवशनम्, उपलभ्य—ज्ञात्वा, सूत्रधारेण—शिल्पिना, दारुवर्मणा—तदाख्येन, कनकतोरणन्यासादिभि —कनकस्य सुवर्णस्य तोरण बहिर्द्वार तस्य न्यास सन्निवेश स आदि येषा तै , सस्कारविशेषै —नृपलोपरि बहिर्द्वारपातनोद्योगात्मकैरित्यर्थ , प्रथमराजद्वारम्—पूर्वनृपद्वारम्, सस्कृतम्—सस्कारास्पदकृतम् । इदानीम्—अधुना, अस्माभि —शिल्पिभि , अभ्यन्तरे—अन्तराले, सस्कार —परिष्कार , विधेय —कर्तव्य ।तत —तदनन्तरम्, अनादिष्टेनैव—आदेशमप्राप्तवतैव, दारुवर्मणा, राजभवनद्वार, सस्कृतम्, इति—अस्माद्धेतो , परितुष्टेन—सन्तुष्टेन इव, चाणक्यवटुना—विष्णुगुप्तेन, सुचिर—बहुकाल, दारुवर्मण , दाक्ष्य—निपुणताम्, अभिनन्द्य—प्रशस्य, अभिहितम्—'दारुवर्मन् ! अस्य—दाक्ष्यस्य, अनुरूप—सदृश, फलम्, अचिरात्—शीघ्रम्, अधिगमिष्यसि—प्राप्स्यसि' ।

हिंदी अनुवाद—विराधगुप्त—अमात्य ! इसमें भाग्य की मनमानी है।

राक्षस—तब तब ?

विराधगुप्त—तब पिता की हत्या से घबडाकर कुमार मलयकेतु के कुसुमपुर से भाग जाने पर, पर्वतक के भाई वैरोचक को विश्वास दिला दिये जाने पर और चन्द्रगुप्त के नन्द के महल मे प्रवेश करने की घोषणा कर दी जाने पर दुष्ट चाणक्य ने कुसुमपुर के रहने वाले सभी कारीगरो को बुलाकर कहा कि ज्योतिषियो के कहने के अनुसार आज ही आधी रात के समय चन्द्रगुप्त का नन्द के भवन मे प्रवेश करना इष्ट होगा। इसलिए प्रथम द्वार से लेकर राज-भवन को सुसज्जित

कर दो। उस पर कारीगरों ने कहा—'आर्य ! पहले ही महाराज चन्द्रगुप्त के नन्द-भवन मे प्रवेश को जानकर शिल्पी दारुवर्मा ने सोने के तोरण की रचना आदि सजावटो से राजभवन के प्रथम द्वार को सजा दिया। अब हमें भीतर की सजावट करनी है।' तदनन्तर बिना कहे ही दारुवर्मा ने राजभवन के द्वार को सजा दिया—इससे मानों सन्तुष्ट होकर अल्पबुद्धि चाणक्य ने बड़ी देर तक दारुवर्मा के कौशल की प्रशंसा करके कहा—'दारुवर्मा ! इस कौशल के अनुरूप फल शीघ्र प्राप्त करोगे।'

**टिप्पणी**—**सांवत्सरिक**—ज्योतिषी। संवत्सरं कथयन्ति बोधयन्ति वा इति संवत्सर+ठञ् शेषे, तस्य इकादेशः। **अर्धरात्रसमये**—अर्धं रात्रेः इति अर्धरात्रः एकदेशितत्०; समासान्त अच् प्रत्ययः 'अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इत्यनेन, 'रात्राह्नाहाः पुंसि' इत्यनेन पुंस्त्वम्। अर्धरात्र एव समयः अर्धरात्रसमयः, तस्मिन्। कालाधिकरणे सप्तमी। **प्रथमद्वारात्**—अत्र प्रभृत्यर्थयोगे पञ्चमी। **संस्कारविशेषैः**—विशेष प्रकार की सजावटो से। इसका गूढार्थ है—चन्द्रगुप्त के ऊपर तोरण गिराने के प्रयत्नो से। **अभ्यन्तरे संस्कारः**—भीतर में सजावट। इसका गूढार्थ है—चन्द्रगुप्त को विष देना तथा शयन-कक्ष में मारना। **विधेयः**—वि√धा+यत् कर्मणि। **चाणक्यवटुना**—अल्पमति या क्षुद्रबुद्धि चाणक्य ने। चाणक्यश्चासौ वटुश्च इति चाणक्यवटुः, तेन। **अनुरूपं फलम्**—उचित फल। इसका गूढार्थ है— वधरूप फल।

राक्षसः—[ **सोद्वेगम्** ] सखे ! कुतश्चाणक्यवटोःपरितोषः ? अफलमनिष्टफलं वा दारुवर्मणः प्रयत्नमवगच्छामि। यदनेन बुद्धिमोहादथवा राजभक्तिप्रकर्षान्नियोगकालमप्रतीक्षमाणेन जनितश्चाणक्यवटोश्चेतसि बलवान् विकल्पः। ततस्ततः ?

**विराधगुप्तः**— ततश्चाणक्यहतकेनानुकूललग्नवशादद्यार्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति शिल्पिनः पौरांश्च गृहीतार्थान् कृत्वा तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातरं वैरोचकमेकासने चन्द्रगुप्तेन सहोपवेश्य कृतः पृथ्वीराज्यार्धभागः।

**राक्षसः**—किं वातिसृष्टं पर्वतेश्वरभ्रात्रे वैरोचकाय पूर्वप्रतिश्रुतं राज्यम् ?

**विराधगुप्तः**—अथ किम् ?

राक्षस —[स्वगतम्] नियतमतिधूर्तवटुना तस्यापि तपस्विन कमप्यु-पांशुवधमाकलय्य पवनेश्वरविनाशजनितस्यायशम परिहारार्थमेषा लोक-प्रतिपत्तिरपचरिता । [प्रकाशम्] ततस्तत ?

व्याख्या—मोद्वेगम्—उद्वेगेन उत्कण्ठया सहित यथा स्यात् तथा आहेति शेष, सखे—मित्र, चाणक्यवटो —अल्पमतिचाणक्यस्य, परिताप —सन्तोष, कुत —कस्मात् ? दारुवर्मण, प्रयत्न—प्रयासम्, अफल—निष्फलम्, वा—अथवा, अनिष्टफलम्—अशुभफलम्, अवगच्छामि—जानामि । यत्—यस्मात्, बुद्धि-मोहात्—मतिभ्रमात्, अथवा राजभक्तिप्रकर्षात्—राज्ञि सत्रार्थसिद्धौ भक्त्या-धिक्यप्रदर्शनात्, नियोगकालम्—आदेशसमयम्, अप्रतीक्षमाणेन—असहिष्णुना, अनेन—दारुवर्मणा, चाणक्यवटो, चेतसि—मनसि, बलवान्—प्रबल, विकल्प —सन्देह, जनित —उत्पादित । तत —तदनन्तरम्, चाणक्यहतकेन, अनुकूललग्नवशात्—शुभमुहूर्तकारणात्, अद्य, अर्धरात्रसमये, चन्द्रगुप्तस्य, नन्दभवन-प्रवेश, भविष्यति, इति, शिल्पिन, पौराश्च, गृहीतार्थान्—अवगताभिप्रायान्, कृत्वा—विधाय, तस्मिन्नेव क्षणे—नन्दभवनप्रवेशसमय एवेत्यर्थ, पर्वतेश्वर-भ्रातर—पर्वतकसोदर, वैरोचकम्—एतदाख्यम्, एकासने—एकोपवेशने, चन्द्र-गुप्तेन, सह—सार्धम्, उपवेश्य—संस्थाप्य, पृथ्वीराज्यार्धभाग —पृथ्वी वसुधा एव राज्य तस्यार्धभाग, कृत —विहित । किं, वैरोचकाय, पूर्वप्रतिश्रुत—प्राक्प्रति-ज्ञात राज्यम्, अतिसृष्टम्—दत्तम् । अतिधूर्तवटुना—अतिशठेन चाणक्येनेति शेष, तपस्विन —वराकस्य, तस्यापि—पर्वतेश्वरभ्रातुरपि, कमपि—अनिर्वचनीयमपि, उपांशुवधम्—रहस्यमारणम्, आकलय्य—अवधार्य, पर्वतेश्वरविनाशजनितस्य—पर्वतेश्वरहत्योत्पन्नस्य, अयशम —अकीर्ते, परिहारार्थम्—निवारणार्थम्, नियत—निश्चितम्, एषा, लोकप्रतिपत्ति —लोकाना जनाना प्रतिपत्ति अवबोध, उपचरिता—परिकल्पिता ।

हिन्दी अनुवाद—राक्षस—[ उद्विग्नता के साथ ] मित्र ! मदमति चाणक्य को सन्तोष कहाँ ? मैं तो दारुवर्मा के प्रयत्न को निष्फल या अनर्थकारी समझता हूँ । जो कि इसने मतिभ्रम के कारण अथवा राजभक्ति की अधिकता-वश आदेश के समय की प्रतीक्षा किये बिना दुष्ट चाणक्य के मन में बडा सन्देह उत्पन्न कर दिया । तब तब ?

**विराधगुप्त**—तब दुष्ट चाणक्य ने शुभ लग्न के कारण आज आधी रात के समय चन्द्रगुप्त का नन्द-भवन में प्रवेश होगा—इस बात से कारीगरों और नागरिकों को अवगत कराकर उसी समय पर्वतेश्वर के भाई वैरोचक को चन्द्रगुप्त के साथ एक आसन पर बैठाकर पृथ्वी रूपी राज्य का आधा हिस्सा लगा दिया।

**राक्षस**—क्या पर्वतेश्वर के भाई वैरोचक को पहले का स्वीकारा हुआ राज्य दे दिया ?

**विराधगुप्त**—और क्या ?

**राक्षस**—[ मन में ] निश्चय ही अतिदुष्ट ( चाणक्य ) ने उस बेचारे की भी कोई रहस्यमय हत्या सोचकर पर्वतेश्वर के विनाश से उत्पन्न अपयश को मिटाने के लिए यह जनता में धारणा बना दी है। [ प्रकट ] तब तब ?

**टिप्पणी**—अफलम्—अविद्यमानं फलम् अस्मिन् इति अफलः नञ्बहुव्रीहि स०, तम्। अनिष्टफलम्—न इष्टम् अनिष्टम् नञ्तत्०। अनिष्टं फलम् अस्य इति अनिष्टफलः बहुव्रीहि स०, तम्। अनुकूललग्नवशात्—√लग्+क्त कर्तरि लग्नम्। अनुकूल लग्नम् कर्मधारय स०। तस्य वशम् = आयत्तता षष्ठीतत्०, तस्मात्। गृहीतार्थान्—जिन्हे बात मालूम हो गई हो। गृहीतः अर्थः = विषयः यै: ते गृहीतार्थाः, तान्। अतिसृष्टः—दे दिया। अति√सृज्+क्त कर्मणि। उपांशुवधम्—एकान्त मे की जाने वाली हत्या को। 'उपांशु' यह एक अव्यय है। उपांशु वधः सुप्सुपा स०, तम्। आकलय्य—विचार कर। आ√कल्+णिच् स्वार्थे+क्त्वा—ल्यप्। लोकप्रतिपत्तिः—लोक में प्रसिद्धि। प्रति√पद्+क्तिन् भावे = प्रतिपत्तिः। लोके प्रतिपत्तिः सुप्सुपा स०। उपचरिता—फैला दी है। उप√चर्+क्त कर्मणि। यहाँ राक्षस यह समझ रहा है कि वैरोचक को आधा राज्य देकर चाणक्य पर्वतेश्वर की हत्या के कलक को धोना चाहता है; किन्तु राक्षस को यह पता नही है कि चाणक्य की कूटनीति ने जनता में यह अफवाह फैला रखी है कि पर्वतेश्वर को मरवाने वाला राक्षस ही है।

**विराधगुप्तः**—ततः प्रथममेव प्रकाशिते चन्द्रगुप्तस्यार्धरात्रे नन्दभवन-प्रवेशे कृताभिषेके च वैरोचके विमलमुक्तागुणपरिक्षेपोपरचितपटवारवाण-प्रच्छादितशरीरे मणिमयमुकुटनिविडनियतरुचिरतरमौलौ सुरभिकुसुम-दामवैकक्षकावभासितविपुलवक्षःस्थले परिचिततमैरप्यनभिज्ञायमानाकृतौ

चाणक्यहतकादेशाच्चन्द्रगुप्तोपवाह्या चन्द्रलेखा नाम गजवशामारुह्य चन्द्रगुप्तानुयायिना राजलोकेन अनुगम्यमाने जवेन देवस्य नन्दस्य भवनं प्रविशति वैरोचके युष्मत्प्रयुक्तेन सूत्रधारेण दारुवर्मणा चन्द्रगुप्तोऽयमिति मत्वा वैरोचकस्योपरि निपातनाय सज्जीकृतं यन्त्रतोरणम्। अत्रान्तरे बहिर्निगृहीतवाहनेषु स्थितेषु चन्द्रगुप्तानुयायिषु भूमिपालेषु युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिपातिना बर्बरकेण कनकदण्डान्तर्निहितामसिपुत्रिकामाक्रष्टुकामेन अवलम्बिता करेण कनकशृङ्खलावलम्बिनी कनकदण्डिका।

राक्षसः—उभयोरप्यस्थाने यत्नः। ततस्ततः ?

व्याख्या—ततः—तत्पश्चात्, प्रथममेव—पूर्वमेव, प्रकाशिते—प्रचारिते, चन्द्रगुप्तस्य, कृताभिषेके च—विहितराज्यप्राप्तिप्राक्कालिकस्नपने च, वैरोचके, विमलमुक्तागुणपरिक्षेपोपरचितपटवारबाणप्रच्छादितशरीरे—विमलानां निर्मलानां मुक्तागुणानां मुक्ताहाराणां यः परिक्षेपः मण्डनाकारेण विन्यासः तेन उपरचितः कल्पितः यः चित्रः अनेकविधवर्णः पटः तन्निर्मितः यः वारबाणः कञ्चुकः तेन प्रच्छादितम् आच्छादितम् शरीरं यस्य तादृशे, मणिमयमुकुटनिविडनियतरुचिरतरमौलौ—मणिमयेन मुकुटेन निविडं यथा स्यात् तथा नियतः बद्धः रुचिरतरः मनोज्ञः मौलिः संयतः कचः यस्य तादृशे, सुरभिकुसुमदामवैकक्षकावभासितविपुलवक्षःस्थले—सुरभि सुगन्धि यत् कुसुमदाम पुष्पमाल्यं तदेव वैकक्षकं यज्ञोपवीतवत्तिर्यग्लम्बितस्रक् तेन अवभासितं सुशोभितं विपुलं महत् वक्षःस्थलम् उरःस्थलं यस्य तादृशे, परिचिततमे अपि—अतिशयेन सम्तुते अपि, अनभिज्ञायमानाकृतौ—न अभिज्ञायमाना अवगम्यमाना आकृतिः आकारः यस्य तादृशे, चाणक्यहतकादेशात्, निन्दितविष्णुगुप्तनिदेशात्, चन्द्रगुप्तोपवाह्या—चन्द्रगुप्तः उपवाह्यः वहनीयः यस्याः ताम् चन्द्रगुप्तवाहिनीमिति यावत्, चन्द्रलेखा नाम—चन्द्रलेखेत्यभिधानां, गजवशां—करिणीम्, आरुह्य—तदुपरि स्थित्वा, चन्द्रगुप्तानुयायिना—चन्द्रगुप्तस्य मौर्यस्य अनुयायिना अनुगामिना, राजलोकेन—नृपजनेन, अनुगम्यमाने—अनुस्रियमाणे, वैरोचके, जवेन—वेगेन, देवस्य—महाराजस्य नन्दस्य, भवनं—गृहं, प्रविशति—अभ्यन्तरं गच्छति सति, युष्मत्प्रयुक्तेन—भवत्प्रेरितेन, सूत्रधारेण—शिल्पिना, दारुवर्मणा, अयम्—एषः, चन्द्रगुप्तः—वृषलः, इति मत्वा—इत्यवगत्य, वैरोचकस्य उपरि, निपातनाय—प्रक्षेपणाय, यन्त्रतोरणं—तोरणरूपेण निर्मितं यन्त्रम्, सज्जीकृतम्—समुद्यतम्। अत्रान्तरे—अस्मिन् मध्ये, बहिर्निगृहीत-

वाहनेषु—बहिः निगृहीतानि नियन्त्रितानि वाहनानि अश्वादयो यैः तादृशेषु, स्थितेषु, चन्द्रगुप्तानुयायिषु, भूमिपालेपु—राजसु, युष्मत्प्रयुक्तेनैव, चन्द्रगुप्तनिपादिना—वृषलहस्तिपकेन, वर्वरकेण—तदाख्येन, कनकदण्डान्तर्निहिताम्—कनकस्य स्वर्णस्य दण्डो यष्टी तस्य अन्तः अभ्यन्तरे निहितां स्थापिताम्, असिपुत्रिकां—छुरिकाम्, आकृष्टुकामेन—बहिर्निःसारणेच्छुना, करेण—हस्तेन, कनकशृङ्खलावलम्बिनी—कनकस्य सुवर्णस्य शृङ्खला बन्धनरज्जुः ताम् अवलम्बते तच्छीलेति, कनकदण्डिका सुवर्णयष्टिः, अवलम्बिता—धृता। उभयोः दारुवर्मवर्वरकयोः, अस्थाने—अयुक्तस्थाने, यत्नः—उद्योगः।

**हिन्दी अनुवाद**—**विराधगुप्त**—तदन्तर पहले ही चन्द्रगुप्त के अर्धरात्रि के समय नन्दभवन में प्रवेश का प्रचार हो जाने पर, वैरोचक के अभिषेक कर दिये जाने पर, उज्ज्वल मोतियो की लंबी लटकती मालाओं से खचित रंग-बिरंगे कंचुक से ( वैरोचक के ) शरीर के ढक जाने पर, मणिनिर्मित मुकुट से कसकर जकडे हुए अत्यन्त सुन्दर केशपाश के होने पर, सुगन्धित गजरे के जनेऊ की तरह धारण करने से विशाल वक्षःस्थल के शोभासम्पन्न होने पर, परिचितों से भी न पहचानी जाती हुई आकृति के होने पर और दुष्ट चाणक्य के आदेश से चन्द्रगुप्त के चढने योग्य चन्द्रलेखा नामक हथिनी पर चढ़कर चन्द्रगुप्त के अनुयायी राजाओं से अनुसरण किये जाते हुए वैरोचक के शीघ्रता से महाराज नन्द के भवन मे प्रवेश करने पर आपके भेजे हुए शिल्पी दारुवर्मा ने 'यह चन्द्रगुप्त है' ऐसा समझकर वैरोचक के ऊपर गिराने के लिए तोरण रूपी यन्त्र को सँभाल लिया। इसी बीच चन्द्रगुप्त के अनुयायी राजाओ के बाहर वाहनों को रोककर ठहर जाने पर आपके भेजे हुए चन्द्रगुप्त के महावत वर्वरक ने सोने की छडी के भीतर रखी हुई छुरी को खींचने की इच्छा से सोने की जंजीर से लटकती हुई सोने की छड़ी (की मूठ) को हाथ से पकड़ लिया।

**राक्षस**—दोनों का प्रयत्न अनुचित स्थान पर है। तब तब ?

**टिप्पणी**—कृताभिषेके—कृतः अभिषेकः यस्य असौ कृताभिषेकः, तस्मिन्। वैकक्षक—जनेऊ की तरह पहना हुआ हार। विशिष्टः कक्षः अस्मात् इति विकक्षम् प्रादिबहुव्रीहि स०। विकक्षे भवम् इति विकक्ष+अण्+कन् स्वार्थे=वैकक्षकम्। उपवाह्याम्—उप√वह्+ण्यत् कर्मणि। यह 'गजवशाम्' का विशेषण है। यन्त्रतोरणम्—यन्त्रकलितं यन्त्रयुक्तं यन्त्रमुक्तं वा तोरणम्,

मध्यपदलोपी स० । कनकदण्डिका—सोने की छडी । दण्ड एव इति दण्डिका दण्ड+कन् स्वार्थे । टाप् स्त्रियाम् । कनकस्य दण्डिका कनकदण्डिका ।

विराधगुप्त—अथ जघनाभिघातमुत्प्रेक्षमाणा गजवधूरतिजवनतया गत्यन्तरमारूढवती । तत प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन प्रभ्रष्टलक्ष्य पतता यन्त्रतोरणेन आकृष्टकृपाणीव्यग्रपाणिरनासादयन्नेव चन्द्रगुप्त-प्रत्याशया वैरोचक, हतस्तपस्वी वर्वरक । ततो दारुवर्मणा, यन्त्रतोरण-निपातनादात्मवधमाकलय्य शीघ्रमेवोत्तुङ्गतोरणस्थानमारूढेन, यन्त्र-घट्टनबीजलोहकीलकमादाय हस्तिनीगत एव हतस्तपस्वी वैरोचक ।

व्याख्या—अथ—अनन्तरम्, अतिजवनतया—अतिद्रुतधावनाद्धेतो , जघना-भिघातम्—जघने नितम्बे अभिघातम् आघातम् उत्प्रेक्षमाणा सम्भावयन्ती, गजवधू —हस्तिनी, गत्यन्तरम्—मन्दगतिम्, आरूढवती—अवलम्बितवती । तत तदनन्तरम्, प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन—प्रथमा पूर्वा या गति द्रुत-गतिरित्यर्थ तस्या अनुरोधेन अपेक्षया प्रत्याकलित विघट्टित मुक्त च, तादृशेन, प्रभ्रष्टलक्ष्यम्—प्रभ्रष्टम् च्युत लक्ष्य शरव्य यत्र तद्यथा स्यात् तथा पतता, यन्त्रतोरणेन—तोरणरूपेण निर्मितयन्त्रविशेषेण, आकृष्टकृपाणीव्यग्रपाणि — आकृष्टा कनकदण्डिकाया मध्यात् निष्कासिता या कृपाणी छुरिका तस्या तया वा व्यग्र व्यापृत पाणि कर यस्य तथाविध , तपस्वी—वराक , वर्वरक , चन्द्र-गुप्तप्रत्याशया—वृषलधिया, वैरोचकम्, अनासादयन्नेव—( हननार्थम् ) अप्रा-प्नुवन्नेव, हत —विनाशित । तत —तत्पश्चात्, यन्त्रतोरणनिपातनात्—यन्त्रतोरणप्रहरणात्, आत्मवध—स्वविनाशम्, आकलय्य—तर्कयित्वा, शीघ्र-मेव—झटिति, उत्तुङ्गतोरणस्थानम्—उन्नततरबहिर्द्वारस्थलम्, आरूढेन—प्राप्तवता, यन्त्रघट्टनबीजलोहकीलकम्—यन्त्रस्य यत् घट्टनम् चालन तस्य बीज कारण यत् लोहकीलकम् अय शङ्कु तत्, आदाय—गृहीत्वा, हस्तिनीगत एव—करिणीपृष्ठसमारूढ एव, तपस्वी, वैरोचक , हत ।

हिन्दी अनुवाद—विराधगुप्त—पश्चात् तीव्र दौडने के कारण ( अपने ) नितम्बभाग पर चोट पडने की आशका करती हुई हथिनी मद-मद चलने लगी । तब पहले की गति के अनुसार पकडकर छोड गए तथा निशाना चूककर गिरते हुए तोरण के यन्त्र से, खींची हुई छुरी से व्याप्त हाथ वाला ( अर्थात् प्रहार के लिए उद्यतहस्त ) बेचारा वर्वरक चन्द्रगुप्त की आशा मे वैरोचक को न प्राप्त

करता हुआ ही मारा गया। उसके बाद यन्त्रयुक्त तोरण के गिराने से अपने वध की संभावना करके दारुवर्मा ने शीघ्र ही ऊँचे तोरण के स्थान पर चढ़कर यन्त्र-चालन के कारणस्वरूप लोहे की कील को लेकर हथिनी पर बैठे ही बेचारे वैरोचक को मार डाला।

**टिप्पणी**—**उत्प्रेक्षमाणा**—संभावना करती हुई। उत्-प्र√ईक्ष्+शानच् कर्तरि। **अतिजवनतया**—तेज चाल से। √जु+ल्युट् भावे=जवनम्। अतिशयितं जवनमस्य इति अतिजवनम्, सामान्ये नपुंसकम्। तस्य भावः, तया। हेतौ तृतीया। यह 'अभिघात' का हेतु है। **गत्यन्तरम्**—दूसरी गति को। अन्या गतिः इति गत्यन्तरम् मयूरव्यंसकादित्वात् स०। **प्रत्याकलित**—धृत। प्रति-आ√कल्+णिच्+क्त कर्मणि। **व्यग्र**—व्यस्त। विशिष्टम् अग्रम् अस्य इति व्यग्रः। **चन्द्रगुप्तप्रत्याशया**—चन्द्रगुप्तसम्बन्धिनी प्रत्याशा, तया। हेतौ तृतीया।

**राक्षसः**—कष्टम्! अनर्थद्वयमापतितम्। न हतश्चन्द्रगुप्तो हतौ वैरोचकवर्वरकौ!! [ सावेगमात्मगतम् ] नैतावुभौ हतौ, दैवेन वयमेव हताः। [प्रकाशम्] अथ स सूत्रधारो दारुवर्मा क्व ?

**विराधगुप्तः**—वैरोचकपुरः सरेण पदातिलोकेन लोष्टघातं हतः।

**राक्षसः**—[ सास्रम् ] कष्टम्! अहो! वत्सलेन सुहृदा दारुवर्मणा वियुक्ताः स्म। अथ तत्रत्येन भिषजाऽभयदत्तेन किमनुष्ठितम् ?

**विराधगुप्तः**—अमात्य! सर्वमनुष्ठितम्।

**राक्षसः**—[सहर्षम्] किं हतो दुरात्मा चन्द्रगुप्तः ?

**विराधगुप्तः**—अमात्य! दैवान्न हतः।

**राक्षसः**—[ सविषादम् ] तत् किमिदानी कथयसि परितुष्टः 'सर्व-मनुष्ठितम्' इति।

**विराधगुप्तः**—अमात्य! कल्पितमनेन विषचूर्णमिश्रमौषधं चन्द्र-गुप्ताय। तच्चप्रत्यक्षीकुर्वता चाणक्यहतकेन कनकभाजने वर्णान्तरमुपगत-मुपलभ्याभिहितश्चन्द्रगुप्तः—'वृषल! सविषमिवौषधं, न पातव्यम्' इति।

**राक्षसः**—शठः खल्वसौ वटुः। अथ स वैद्यः कथम् ?

विराधगुप्त —स, खलु वैद्यस्तदेवौषध पायित उपरतश्च ।

राक्षस —[सविषादम्] अहह ! महान् विज्ञानराशिरुपरत । भद्र ! अथ तस्य शयनाधिकृतस्य प्रमोदकस्य किं वृत्तम् ?

विराधगुप्त —यत् इतरेषाम् ।

राक्षस —[सोद्वेगम्] कथमिव ?

हिंदी अनुवाद—राक्षस—कष्ट की बात है । दो अनर्थ हो गए । न मरा चन्द्रगुप्त, मर गए वैरोचक और बर्बरक !! [ आवेग के साथ मन में ] ये दोनो नहीं मारे गए, भाग्य ने हमे ही मार दिया । [ प्रकट ] अच्छा वह शिल्पी दारुवर्मा कहाँ ( है ) ?

विराधगुप्त—(उसे तो) वैरोचक के पीछे पैदल चलने वाले लोगो ने ढेले मार-मार कर मार दिया ।

राक्षस—[ आसू के साथ ] कष्ट है ! ओह ! स्नेही बन्धु दारुवर्मा से हम वियुक्त हो गए हैं । अच्छा, वहाँ रहने वाले वैद्य अभयदत्त ने क्या किया ?

विराधगुप्त—अमात्य ! सब कुछ किया ।

राक्षस—[ हर्ष के साथ ] क्या दुष्ट चन्द्रगुप्त मारा गया ?

विराधगुप्त—अमात्य ! भाग्य से न मारा गया ।

राक्षस—[ दुःख के साथ ] तब क्या अभी प्रसन्न होकर कह रहे हो कि सब कुछ किया ।

विराधगुप्त—अमात्य ! उसने विष के चूर्ण मे मिश्रित ओषधि चन्द्रगुप्त के लिए तैयार की । किन्तु उसका निरीक्षण करते हुए दुष्ट चाणक्य ने सोने के पात्र मे बदला हुआ रङ्ग पाकर चन्द्रगुप्त से कहा—'चन्द्रगुप्त ! ओषधि विष से मिश्रित मालूम होती है, नही पीनी चाहिए ।'

राक्षस—यह मूर्ख दुष्ट है । अच्छा, उस वैद्य पर क्या बीती ?

विराधगुप्त—उस वैद्य को वही ओषधि पिला दी गई और वह मर गया ।

राक्षस—[ विषाद के साथ ] हाय ! महान् वैज्ञानिक उठ गया । अच्छा, भद्र ! शयन-कक्ष के अधिकारी उस प्रमोदक का क्या हुआ ?

**विराधगुप्त**—जो दूसरो का ( हुआ ) ।

**राक्षस**—[ **उद्वेग के साथ** ] कैसे ?

**टिप्पणी**—**आपतितम्**—सम्प्राप्तम् । आ पड़े । **वैरोचकपुरःसरेण**—जिनके आगे वैरोचक चल रहा है । पुरः अग्रे सरतीति पुरःसरः पुरस् √सृ +ट कर्तरि=पुरःसरः । वैरोचकः पुरः सरः यस्य स वैरोचकपुरःसरः बहुव्रीहि स०, तेन । **पदातिलोकेन**—चरणचारिणा लोकेन । पैदल चलने वाले लोगों ने । पदातीनां लोकः षष्ठीतत्०, तेन । अनुक्ते कर्तरि तृतीया । **लोष्टघातम्**—ढेलों से मारकर । लोष्टैः हत्वा इति लोष्ट √हन्+णमुल् भावे । **भिषजा**—वैद्येन । भिषज्यति रोगान् जयति इति भिषज्+यक् स्वार्थे ( कण्ड्वादि )+क्विप् कर्तरि=भिषक्, तेन । अनुक्ते कर्तरि तृतीया । **प्रत्यक्षीकुर्वता**—निरीक्षमाणेन । **वटुः**—ईषद्विद्यः । **पायितः**—√पा+णिच्+क्त । **विज्ञानराशिः**—चिकित्साविषयकज्ञानाकरः । ओषधिविज्ञानस्य विशेषज्ञ इत्यर्थः । **उपरतः**—मृतः । उप √रम्+क्त कर्तरि । **शयनाधिकृतस्य**—शयनागारनियुक्तस्य । शयने अधिकृतः सुप्सुपा स०, तस्य । **यत् इतरेषाम्**—जो दूसरों का हुआ अर्थात् प्राणनाश ।

विराधगुप्तः—स खलु मूर्खस्तं युष्माभिरतिसृष्टं महान्तमर्थराशिमवाप्य महता व्ययेनोपभोक्तुमारब्धवान् । ततः 'कुतोऽयं भूयान् धनागमस्तव' इति पृच्छ्यमनोऽयं यदा वाक्यभेदान् बहूनकथयत् तदा चाणक्यहतकादेशाद् विचित्रेण वधेन व्यापादितः ।

राक्षसः—[ सोद्वेगम् ] कथमत्रापि वयमेवोपहता दैवेन ? अथ शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्तुमस्मत्प्रयुक्तानां नरपतिशयनगृहस्यान्तःसुरङ्गायां निवसतां बीभत्सकादीनां को वृत्तान्तः ?

विराधगुप्तः—अमात्य ! दारुणो वृत्तान्तः ।

राक्षसः—[ सावेगम् ] कथं दारुणो वृत्तान्तः ? न खलु विदिताः ते तत्र निवसन्तः चाणक्यहतकेन ?

विराधगुप्तः—अथ किम् ?

राक्षसः—कथमिव ?

हिन्दी अनुवाद—विराधगुप्त—उस मूर्ख ने आपकी दी हुई उस महान् धन-राशि को प्राप्त करके बडे खर्च के साथ उपभोग करना आरम्भ किया। पश्चात् यह पूछा जाने पर कि तुम्हें इतना प्रचुर धन कहाँ से आया, वह जब बहुत-सी परस्पर विरोधी बाते कहने लगा तब दुष्ट चाणक्य के आदेश से विचित्र प्रकार के वध के द्वारा मरवा दिया गया।

राक्षस [ उद्वेग के साथ ] क्या यहाँ भी भाग्य ने हमें ही मारा ? अच्छा सोये हुए चन्द्रगुप्त के शरीर पर प्रहार करने के लिए हमारे नियुक्त किये हुए, राजा के शयन-कक्ष के भीतरी सुरंग में निवास करने वाले बीभत्सक आदि का क्या समाचार है ?

विराधगुप्त—अमात्य ! भयानक समाचार है।

राक्षस—[ उद्वेग के साथ ] कैसा भयानक समाचार है ? वहाँ रहते हुए वे दुष्ट चाणक्य के द्वारा ताड लिये तो नहीं गए ?

विराधगुप्त—और क्या ?

राक्षस—कैसे ?

टिप्पणी—खलु—अत्र वाक्यालङ्कारे प्रयुक्त । अतिसृष्टम—दत्तम्। पृच्छ्यमान —जिज्ञास्यमान चाणक्येनेति शेष ।√प्रच्छ्+लट् कर्मणि+शानच् । वाक्यभेदान्—वाक्यस्य भेदान् भिन्नानि वाक्यानि इत्यर्थ । 'भावानयन द्रव्यानयनम्' इति न्यायात् । विचित्रेण—विस्मयोत्पादकेन । विशेषेण चित्र विचित्र तेन । उपहता —विनाशिता । उप√हन्+क्त कर्मणि । अन्त सुरङ्गायाम्—अभ्यन्तरवर्तिनि ।

विराधगुप्त —प्राक् चन्द्रगुप्तप्रवेशात् प्रविष्टमात्रेणैव शयनगृहे चाणक्येन दुरात्मना समन्तादवलोकित । ततस्तु एकस्माद् भित्तिच्छिद्राद् गृहीतभक्तावयवा निष्क्रामन्ती पिपीलिकापङ्क्तिमवलोक्य पुरुषगर्भमेतद्-गृहमिति गृहीतार्थेन दाहित तदन्त शयनगृहम् । तस्मिश्च दह्यमाने धूमावरुद्धदृष्टय प्रथमपिहितनिर्गमनमार्गमनधिगम्य सर्व एव बीभत्स-कादयस्तत्रैव ज्वलनमुपगता उपरताश्च ।

राक्षस—[सास्रम्] सखे ! पश्य, चन्द्रगुप्तस्य दैवसम्पदा सर्व एव

उपरताः। [ सचिन्तम् ] सखे ! दैवसम्पदं पश्य दुरात्मनश्चन्द्रगुप्तहतकस्य !! कुतः ?—

कन्या तस्य वधाय या विषमयी गूढं प्रयुक्ता मया
दैवात् पर्वतकस्तया स निहतो यस्तस्य राज्यार्धभाक् ।
ये यन्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः
मौर्यस्यैव फलन्ति पश्य विविधश्रेयांसि मे नीतयः ॥१६॥

**व्याख्या**—चन्द्रगुप्तप्रवेशात्—वृषलसन्निवेशात्, प्राक्—पूर्वम्, प्रविष्टमात्रेणैव—सन्निवेशमात्रेणैव, दुरात्मना—दुष्टेन, चाणक्येन—विष्णुगुप्तेन, समन्तात्—चतुर्दिक्षु, अवलोकितः—दृष्टः । ततः—तत्पश्चात्, एकस्मात्—अद्वितीयस्मात्, भित्तिच्छिद्रात्—कुड्यरन्ध्रात्, गृहीतभक्तावयवां—गृहीताः मुखे धृताः भक्तस्य अन्नस्य अवयवाः खण्डाः यया तादृशीं, निष्क्रामन्ती—निर्गच्छन्ती, पिपीलिकापङ्क्तिं—पिपीलिकाश्रेणीम्, अवलोक्य—दृष्ट्वा, एतत्, गृहम्—भवनम्, पुरुषगर्भम्—पुरुषाः गर्भे यस्य तादृशम्, (अस्ति), इति—अस्माद्धेतोः, गृहीतार्थेन—गृहीतः अर्थः तत्त्वं येन तादृशेन चाणक्येनेति शेषः, तदन्तःशयनगृहम्—तत् पूर्वोक्तम् अन्तःशयनगृहम् अन्तर्निद्राभवनं, दाहितम्—भस्मसात्कृतम् । तस्मिंश्च—शयनगृहे, दह्यमाने—भस्मसात्कृते सति, धूमावरुद्धदृष्टयः—धूमेन अवरुद्धा दृष्टिः येषां तथाविधाः, बीभत्सकादयः' सर्वे एव, प्रथमम्—पूर्वम्, अपिहितनिर्गमनमार्गम्—निरुद्धबहिर्निःसरणपथम्, अनधिगम्य—अप्राप्य, ज्वलनम्—अग्निम्, उपगताः—प्राप्ताः, उपरताः—मृताश्च । सास्रम्—सरोदनम् । दैवसम्पदं—भाग्यसम्पत्तिम् ।

**अन्वयः**—मया तस्य वधाय या विषमयी कन्या गूढं प्रयुक्ता तया दैवात् सः पर्वतकः निहतः यः तस्य राज्यार्धभाक् । ये यन्त्रेषु रसेषु च प्रणिहिताः ते तैः एव घातिताः । पश्य, मे नीतयः मौर्यस्य एव विविधश्रेयांसि फलन्ति ॥ १६ ॥

**व्याख्या**—मया—राक्षसेन, तस्य—चन्द्रगुप्तस्य, वधाय—नाशाय, या, विषमयी—विषनिर्मिता, कन्या, गूढं—गुप्तं यथा स्यात् तथा, प्रयुक्ता—प्रेरिता, तया—विषकन्यया, दैवात्—भाग्यवशात्, सः पर्वतकः, निहतः—विनाशितः, यः, तस्य—चन्द्रगुप्तस्य, राज्यार्धभाक्—अर्धराज्यस्य हर्ता । ये—जनाः, यन्त्रेषु—प्राणविघातसाधनपदार्थेषु, रसेषु च—विषेषु च, प्रणिहिताः—व्यापारिताः, ते, तैः एव—यन्त्रैः विषैः एव च, घातिताः—हिंसिताः । पश्य—विभावय, मे—मम,

नीतय —प्रयोगा', मौर्यस्य एव—वृपलस्यैव, विविधश्रेयासि—बहुविधकल्याणानि, फलन्ति—समुत्पादयन्ति ॥ १६ ॥

हिन्दी अनुवाद—विराधगुप्त—चन्द्रगुप्त के प्रवेश करने से पहले दुष्ट चाणक्य ने शयन-गृह मे प्रवेश करते ही चारो ओर दृष्टिपात किया । तब दीवार के एक छेद से अन्न के कणो को लिए हुए बाहर निकलती हुई चींटियो की पंक्ति को देखकर इस घर के भीतर ( कुछ ) लोग ( छिपे पडे ) हैं—ऐसा समझकर उस भीतरी शयन-कक्ष को जलवा दिया । जलते हुए उस ( घर ) मे धुएँ से अवरुद्ध दृष्टि वाले वीभत्सक आदि सभी ( जन ) पहले बंद किये हुए बाहर निकलने के मार्ग को न प्राप्त करके जलकर मर गए ।

राक्षस—[ आसू के साथ ] मित्र ! देखो, चन्द्रगुप्त की भाग्य-सम्पत्ति से सभी मर गए । [ चिन्ता के साथ ] मित्र ! दुष्ट पापी चन्द्रगुप्त की भाग्यविभूति तो देखो !! क्योंकि—

मैंने उस ( चन्द्रगुप्त ) की हत्या के लिए जिस विषकन्या को गुप्त रूप से प्रयुक्त किया था, उसने भाग्यवश उस पर्वतक को मार दिया, जो उस ( चन्द्रगुप्त ) के आधे राज्य का भागी था । जो ( मनुष्य चन्द्रगुप्त को मारने के लिए ) यन्त्रो और विषो ( के प्रयोग करने ) मे लगाये गए थे, वे उन्हीं ( यन्त्रो और विषो ) मे मारे गए । देखो, नीतियाँ चन्द्रगुप्त के ही अनेक प्रकार के कल्याण को उत्पन्न कर रही हैं ॥ १६ ॥

टिप्पणी—प्रविष्टमात्रेण—प्रविष्ट एव इति प्रविष्टमात्रम् मयूर-व्यंसकादि स०, तेन । पुरुषगर्भम्—पुरुष गर्भे यस्य तत् बहुव्रीहि स० । यहा 'सप्तमीविशेषणे बहुव्रीहौ' सूत्र के बल से 'गर्भ' का पूर्वप्रयोग होना चाहिए, किन्तु 'गड्वादेः परा सप्तमी' इस वार्तिक के बल से उसका परप्रयोग ही हुआ । अपिहित—बंद । अपि√धा+क्त कर्मणि 'दधातेर्हि' इत्यनेन धा इत्यस्य हि आदेश । यहा भागुरि आचार्य के मत से अपि के अकार का लोप हो जाने पर 'पिहित' भी प्रातिपदिक होता है। निर्गमन—यहा 'न भाभूकमिगमिप्यायीवेपाम्' सूत्र से णत्व का निषेध हो जाने के कारण 'निर्गमण' प्रातिपदिक नहीं बनता है । विषमयी—विष सर्वथा प्रकृत प्रचुरमित्यर्थ अस्याम् इति विष+मयट्—ङीप् । गूढम्—√गुह्+क्त कर्मणि, तत् यथा स्यात् तथा । राज्यार्धभाक्—राज्यस्य अर्धम् षष्ठीतत्० (एकदेशिसमास करने से 'अर्धराज्यम्' प्रयोग होना है,)

तत् भजति इति राज्यार्ध√भज्+ण्वि कर्तरि=राज्यार्धभाक् । प्रणिहितः—नियुक्त किए गए । प्र-नि√धा+क्त कर्मणि, धा इत्यस्य हि आदेशः, 'नेर्गदनद' —इत्यादिना णत्वम् । घातिताः—मारे गए ।√हन्+णिच्+क्त कर्मणि । इसका कर्ता लुप्त 'मया' है । तानि ( रसयन्त्राणि ) तान् हतवन्ति=अहम् तैः तान् घातितवान्=मया तैः ते घातिताः । इस पद्य में विषमालंकार है, वैदर्भी रीति है, माधुर्य गुण है और शार्दूलविक्रीडित छन्द है । इस छन्द का लक्षण १, १२ में देखिए ।। १६ ।।

**विराधगुप्तः**—अमात्य ! तथापि प्रारब्धमपरित्याज्यमेव । पश्यतु—

> प्रारभ्यते न खलु विघ्नभयेन नीचैः
> प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
> विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
> प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ।।१७।।

**अन्वयः**—नीचैः विघ्नभयेन न खलु प्रारभ्यते । मध्याः प्रारभ्य विघ्नविहताः ( सन्तः ) विरमन्ति । त्वमिव उत्तमगुणाः विघ्नैः पुनः पुनः प्रतिहन्यमानाः अपि प्रारब्धम् उद्वहन्ति ।। १७ ।।

**व्याख्या**—नीचैः—अधमैः, विघ्नभयेन—अन्तरायभीत्या, न खलु—नैव, प्रारभ्यते—कर्म प्रस्तूयते । मध्याः—मध्यमाः जनाः, प्रारभ्य—कर्म प्रस्तुत्य, विघ्नविहताः—विघ्नैः प्रत्यूहैः विहताः बाधिताः ( सन्तः ), विरमन्ति—निवर्तन्ते । त्वमिव—भवानिव, उत्तमगुणाः—उत्कृष्टगुणवन्तः (जनाः), विघ्नैः—अन्तरायैः, पुनः पुनः—भूयो भूयः, प्रतिहन्यमानाः अपि—बाध्यमाना अपि, प्रारब्धम्—प्रस्तुतं कर्म, उद्वहन्ति—धारयन्ति सम्पादयन्तीत्यर्थः ।। १७ ।।

**हिन्दी अनुवाद**—**विराधगुप्त**—अमात्य ! तो भी प्रारंभ किये हुए कार्य का परित्याग नही करना चाहिए । देखिए—

नीच ( मनुष्य ) विघ्नो के डर से ( कार्य का ) प्रारंभ ही नही करते है । मध्यम ( श्रेणी के लोग ) प्रारंभ करके विघ्नो से बाधित होने पर रुक जाते हैं । किन्तु आप जैसे उत्तम गुणों वाले ( जन ) विघ्नों से बार-बार बाधित होते हुए भी प्रारंभ किये हुए ( कार्य ) को सम्पन्न करते है ।। १७ ।।

**टिप्पणी**—**प्रारब्धम्**—प्रक्रान्तम्, प्रस्तुतम् । प्र-आ√रभ्+क्त कर्मणि ।।

अपरित्याज्यम्—न छोड़ने योग्य। परि√त्यज्+ण्यत् कर्मणि, 'त्यजेश्च' इति वार्तिकेन कुत्वनिषेध =परित्याज्यम्। न परित्याज्यम् अपरित्याज्यम् नञ्तत्०। विघ्नभयेन—वि√हन्+क करणे घञर्थे=विघ्न। तस्मात् भयम् पञ्चमीतत्०, तेन। हेतौ तृतीया। विरमन्ति—अत्र 'व्याङ्परिभ्यो रमः' इत्यनेन परस्मैपदत्वम्। इस श्लोक मे पूर्णोपमा अलकार, व्यतिरेक अलकार और अप्रस्तुतप्रशसा अलकार हैं। इसमे वैदर्भी रीति है, प्रसाद गुण है और वसन्ततिलका छन्द है। इस छन्द का लक्षण १, ८ मे देखिए ॥१७॥

अपि च—

किं शेषस्य भरव्यथा न वपुषि क्ष्मा न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चल ।
किन्त्वङ्गीकृतमुत्सृजन् कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढ प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥१८॥

अन्वय —शेषस्य वपुषि किं भरव्यथा न यदेष क्ष्मा न क्षिपति ? किं वा दिनपते परिश्रमो नास्ति यत् निश्चलो न आस्ते ? किंतु श्लाघ्यो जन अङ्गीकृत कृपणवत् उत्सृजन् लज्जते। हि प्रतिपन्नवस्तुषु निर्व्यूढम् एतत् सता गोत्रव्रतम् ॥ १८ ॥

व्याख्या—शेषस्य—नागराजस्य, वपुषि—शरीरे, किं भरव्यथा न—किं भूभारधारणजन्या क्लान्ति न, यत्—यस्मात्, एष —शेष, क्ष्मा—धरित्री, न क्षिपति—न पातयति ? किं वा, दिनपते —सूर्यस्य, परिश्रम —आयास, नास्ति—न भवति, यत्—यस्मात्, (एष) निश्चल —स्थिर, न आस्ते—न तिष्ठति ? किन्तु—वस्तुतस्तु, श्लाघ्य —प्रशसनीय, जन —पुरुष, अङ्गीकृत—स्वीकृत (कर्म), कृपणवत्—कापुरुष इव, उत्सृजन्—परित्यजन्, लज्जते—त्रपते। हि—यत, प्रतिपन्नवस्तुषु—स्वीकृतविषयेषु, निर्व्यूढम्—निर्वाह, एतत्, सता—साधूना, गोत्रव्रतम्—कुलधर्म ॥ १८ ॥

हिन्दी अनुवाद—और भी—क्या शेषनाग के शरीर मे (पृथ्वी के) भार से कष्ट नही होता है, जो ये पृथ्वी को (अपने सिर पर से उतार कर) नही फेंक देते है ? अथवा सूर्य को (दिन रात चलने से) परिश्रम नही होता है, जो (ये) स्थिर नही होते हैं ? किन्तु उत्तम पुरुष स्वीकार किये हुए (कार्य) को पामर की भाँति परित्याग करता हुआ लज्जित होता है। क्योंकि स्वीकृत

वस्तुओं के सम्बन्ध में निर्वाह करना ( अर्थात् विधिवत् उनका पालन करना ), यह महापुरुषों का कुलधर्म है ॥ १८ ॥

**टिप्पणी**—उत्सृजन्—उद्√सृज्+शतृ हेतौ 'लक्षणहेत्वोः क्रियायाः' इत्यनेन। श्लाघ्यः—प्रशंसनीय। √श्लाघ्+ण्यत् कर्मणि। **निर्व्यूढम्**—निर्वाह। निर्—वि√वह्=क्त भावे। यह लुप्त 'भवति' क्रिया का कर्ता है और 'गोत्रव्रतम्' इसका विधेय विशेषण है। इस पद्य में अर्थान्तरन्यास अलंकार उपमा अलंकार से संकीर्ण है। यहाँ भी वैदर्भी रीति है, प्रसाद गुण है और शार्दूलविक्रीडित छन्द है। इस छन्द का लक्षण १, १२ में देखिए ॥ १८ ॥

**राक्षसः**—सखे! प्रारब्धमपरित्याज्यमिति प्रत्यक्षमेवैतद्भवताम्। ततस्ततः?

**विराधगुप्तः**—ततः प्रभृति चाणक्यहतकश्चन्द्रगुप्तस्य शरीरे सहस्र-गुणमप्रमत्तः, एभ्य एव ईदृशं भवतीत्यन्विष्य निगृहीतवान् कुसुमपुर-निवासिनो युष्मदीयानाप्तपुरुषान्।

**राक्षसः**—[**सोद्वेगम्**] वयस्य! कथय कथय के के निगृहीताः?

**विराधगुप्तः**—अमात्य! आदावेव तावत् क्षपणको जीवसिद्धिः सनिकरं नगरान्निर्वासितः।

**राक्षसः**—[**आत्मगतम्**] एतावत् सह्यं, न निष्परिग्रहं स्थान-परिभ्रंशः पीडयिष्यति। [**प्रकाशम्**] सखे! कमपराधमुद्दिश्य निर्वा-सित एषः?

**विराधगुप्तः**—एष दुरात्मा राक्षसप्रयुक्तया विषकन्यया पर्वतेश्वरं घातितवानिति।

**राक्षसः**—[**स्वगतम्**] साधु कौटिल्य! साधु।

परिहृतमयशः पातितमस्मासु च घातितोऽर्धराज्यहरः।
एकमपि नीतिबीजं बहुफलतामेति यस्य तव ॥ १९ ॥

**अन्वय**—अर्धराज्यहरः घातितः, अयशः परिहृतम् अस्मासु पातितम् च। यस्य तव एकमपि नीतिबीजम् बहुफलताम् एति ॥ १९ ॥

व्याख्या—अर्धराज्यहर —राज्यार्धभाक्, ( पर्वतक ) घातित —व्यापादित , ( तद्वधजनितम् ) अयश —कलङ्क , परिहृतम्—दूरीकृतम्, अस्मासु—मयि, पातित च—आरोपित च । यस्य तव, एकमपि—अद्वितीयमपि, नीतिबीज—जीवसिद्धिनिष्कासनात्मको नीतिहेतु , वहुफलताम्—अनेकफलत्वम्, एति—प्राप्नोति ॥ १६ ॥

हिन्दी अनुवाद—राक्षस—मित्र ! प्रारभ किया हुआ कार्य छोडने योग्य नहीं है, यह तो आपके समक्ष ही है । तब क्या हुआ ?

विराधगुप्त—तब से लेकर दुष्ट चाणक्य चन्द्रगुप्त के शरीर के बारे मे हजार गुने सावधान रहते हुए, इन्ही ( लोगो ) से ऐसा होता है—यह मानकर कुसुमपुर मे रहने वाले आपके विश्वस्त पुरुषो को ढूढकर कैद कर लिया ।

राक्षस—[ उद्वेग के साथ ] मित्र बताओ, बताओ किन-किन को पकड लिया है ?

विराधगुप्त—अमात्य ! सबसे पहले तो क्षपणक जीवसिद्धि को नगर से अपमानपूर्वक निर्वासित कर दिया है ।

राक्षस—[ मन मे ] इतना सह्य है, ( क्योकि ) विषयासक्ति से रहित को स्थान-परित्याग पीडित नहीं करेगा । [ प्रकट ] मित्र ! किस अपराध से यह निकाला गया ?

विराधगुप्त—इस दुष्ट ने राक्षस के द्वारा प्रयुक्त विषकन्या से पर्वतेश्वर का वध कराया ।

राक्षस—[ मन मे ] वाह कौटिल्य ! वाह ।

आधे राज्य के भागी को मरवा दिया, कलक को मिटा दिया और मुझ पर ( उस कलक को ) लाद भी दिया । जिस तुम्हारी नीति का एक ही बीज नाना भाति के फलो को प्राप्त कर रहा है ॥ १६ ॥

टिप्पणी—प्रत्यक्षमेव—समक्षमेव । अक्ष=इन्द्रिय । अक्षाणि प्रतिगतम् इति प्रत्यक्षम् प्रादितत्० । अथवा अक्ष्णो आभिमुख्यम् इत्यर्थे 'लक्षणेनाभिप्रती—'इत्यनेन अव्ययीभावसमास , 'प्रतिपरसमनुभ्योऽक्ष्ण ' इत्यनेन समासान्तटच्प्रत्यय । सहस्रगुणम्—सहस्र गुणा यस्मिन् कर्मणि तद् यथा स्यात्

तथा । क्रियाविशेषणमेतत् । **अन्विष्य**—संमृग्य । **निगृहीतवान्**—दण्डितवान् । **युष्मदीयान्**—युष्माकम् इमे इति युष्मद्+छ—ईय=युष्मदीयाः, तान् । **आप्तपुरुषान्**—विश्वस्तजनान् । **निष्परिग्रहम्**—विषयभोग या परिवार से रहित । परिगृह्यते इति परि√ग्रह्+अप् कर्मणि=परिग्रहः । निरस्तः परिग्रहः अनेन इति निष्परिग्रहः बहुव्रीहि स०, 'इदुदुपधस्य' इत्यनेन षत्वम् । **अर्धराज्यहरः**—आधा राज्य पाने वाला । अर्धञ्च तत् राज्यम् अर्धराज्यम् कर्मधारय स० । हरतीति हरः√हृ+अच् कर्तरि । अर्धराज्यस्य हरः षष्ठीतत्० । **बहुफलताम्**—बहूनि फलानि यस्य स बहुफलः बहुव्रीहि स० । तस्य भावः तत्ता, ताम् । अत्र चाणक्यस्य नीतिबीजेन फलत्रय समुत्पादितम्—(१) अर्धराज्यहरः घातितः, (२) अयशः परिहृतम्, (३) अयशः अस्मासु पातितम् । **यस्य तव**—यहाँ 'यस्य' का अन्वय ठीक नही बैठ रहा है । अतएव इसके पूर्व चूर्णक के पद—साधु कौटिल्य ! साधु—का अध्याहार कर लेना चाहिए । इस श्लोक में काव्यलिंग अलंकार है, वैदर्भी रीति है, प्रसाद गुण है और आर्या छन्द है । आर्या का लक्षण १, ५ में देखिए ।। १९ ।।

[ **प्रकाशम्** ] ततस्ततः ?

**विराधगुप्तः**—ततश्चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन व्यापारिता दारुवर्मादय इति नगरे प्रख्याप्य शकटदासः शूलमारोपितः ।

**राक्षसः**—[ **सास्रम्** ] हा सखे ! शकटदास ! अयुक्तस्तवायमीदृशो मृत्युः !! अथवा, स्वाम्यर्थमुपरतो न शोच्यस्त्वमसि; वयमेवात्र शोच्याः,—ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः ।

**विराधगुप्तः**—अमात्य ! स्वाम्यर्थ एव साधयितव्य इति प्रयतसे ।

**राक्षसः**—सखे !—

> अस्माभिरमुमेवार्थमालम्ब्य न जिजीविषाम् ।
> परलोकगतो देवः कृतघ्नैर्नानुगम्यते ।। २० ।।

**अन्वयः**—अमुमेव अर्थ न जिजीविषाम् आलम्ब्य कृतघ्नैः अस्माभिः परलोकगतो देवो न अनुगम्यते ।। २० ।।

**व्याख्या**—अमुमेव—उक्तरूपमेव, अर्थ—प्रयोजनम्, न जिजीविषाम्—

जीवनेच्छाम्, आलम्ब्य—आश्रित्य, कृतघ्नै —कृतोपकारानभिज्ञै, अस्माभि, परलोकगत —लोकान्तर प्राप्त, देव —स्वामी नन्द इत्यथ, न अनुगम्यते—न अनुम्रियते ॥ २० ॥

हिंदी अनुवाद—[ प्रकट ] उसके बाद ?

विराधगुप्त—तब चन्द्रगुप्त के शरीर को विनष्ट करने के लिए इसने दारुवर्मा आदि को प्रेरित किया—यह (बात) नगर में प्रसिद्ध कराकर शकटदास को शूली पर चढा दिया गया।

राक्षस—[ आँसू के साथ ] हाय मित्र ! शकटदास ! तुम्हारी ऐसी मृत्यु उचित नही है !! अथवा, स्वामी के लिए मरे हो, तुम शोक करने योग्य नही हो, हम ही इस विषय में शोक करने योग्य हैं,—जो नन्द-वंश के विनष्ट हो जाने पर भी जीने की इच्छा कर रहे हैं।

विराधगुप्त—अमात्य ! स्वामी का प्रयोजन ही सिद्ध करना चाहिए, इसलिए प्रयत्न कर रहे हैं।

राक्षस—मित्र !—

इसी प्रयोजन का—न कि जीने की इच्छा का—आश्रय लेकर कृतघ्न हम दूसरे लोक में पहुँचे हुए स्वामी का अनुमरण नही कर रहे हैं ॥ २० ॥

टिप्पणी—अभिद्रोग्धुम्—अभिजिघांसितुम्। व्यापारिता —नियोजिता। प्रख्याप्य—उद्घोष्य। आरोपित —स्थापित। स्वाम्यर्थम्—स्वामी प्रभु अर्थ कारण यस्मिन् तत् यथा स्यात् तथा। उपरत —मृत। शोच्य — अवश्य शोचनीय इति √शुच् + ण्यत् कर्मणि 'ण्य आवश्यके' इति सूत्रेण कुत्वनिषेध। नन्दकुलविनाशेऽपि—अत्र 'यस्य च भावेन भावलक्षणम्' इति सूत्रेण भावे सप्तमी। जिजीविषाम्—जीवनेच्छाम्। जीवितुमिच्छा इति √जीव् + सन् + अ भावे = जिजीविषा, ताम्। यह 'आलम्ब्य' का कर्म है। कृतघ्नै —√कृ + क्त कर्मणि कृतम्, तत् घ्नन्ति विस्मरणेन इति कृत√हन् + क कर्तरि मूलविभुजादित्वात् = कृतघ्ना, तै। इस श्लोक में काव्यलिंग और परिसंख्या अलंकारों की संसृष्टि है। इसमें वदर्भी रीति है, माधुर्य गुण है, करुण रस है और अनुष्टुप् छन्द है। इस छन्द का लक्षण १, ३ में देखिए ॥ २० ॥

**विराधगुप्तः**—अमात्य ! नैतदेवम् । [ **अस्माकममुमेवार्थमित्यादि पुनः पठति ।** ]

**राक्षसः**—सखे ! कथ्यतामपरस्यापि सुहृद्व्यसनस्य श्रवणे सज्जोऽस्मि ।

**विराधगुप्तः**—तत एतदुपलभ्य चन्दनदासेनोपारूढसाध्वसेनापवाहितममात्यकलत्रम् ।

**राक्षसः**—सखे ! क्रूरस्य चाणक्यवटोः विरुद्धमयुक्तमनुष्ठितं चन्दनदासेन ।

**विराधगुप्तः**—ननु अयुक्ततरः सुहृद्द्रोहः ।

**राक्षसः**—ततस्ततः ?

**विराधगुप्तः**—ततो याच्यमानेनापि यदा न समर्पितमनेनाऽमात्यकलत्रं ततः कुपितेन चाणक्यवटुना— ।

**राक्षसः**—[ **सोद्वेगं** ] स खलु व्यापादितः ?

**विराधगुप्तः**—अमात्य ! न खलु व्यापादितः, किन्तु गृहीतगृहसारः सपुत्रकलत्रः संयम्य बन्धनागारे निक्षिप्तः ।

**राक्षसः**—ततः किं परितुष्टः कथयसि—'अपवाहितमनेन राक्षसकलत्रम्' इति । ननु वक्तव्यं "संयतः सकलत्रो राक्षसः' इति ।

**हिन्दी अनुवाद—विराधगुप्त**—अमात्य ! ऐसी बात नही है । [ **'अस्माकममुमेवार्थम्'**—इत्यादि **श्लोक फिर पढ़ता है ।** ]

**राक्षस**—मित्र ! कहो, दूसरे मित्र की विपत्ति भी सुनने के लिए तैयार हूँ ।

**विराधगुप्त**—तब यह ( शकटदास की घटना ) जानकर भयभीत हुए-चन्दनदास ने आपके परिवार को हटा दिया ।

**राक्षस**—मित्र ! चन्दनदास ने क्रूर वटुक चाणक्य के विरुद्ध ( यह ) अनुचित कार्य किया ।

**विराधगुप्त**—(किन्तु) मित्र-द्रोह तो इससे भी बुरा होता है ।

**राक्षस**—उसके बाद ( क्या हुआ ) ?

विराधगुप्त—अनन्तर माँगने पर भी जब उन्होंने आपके परिवार को नहीं सौंपा तब क्रुद्ध वटुक चाणक्य ने—।

राक्षस—[ घबडाहट के साथ ] क्या वह मार दिया गया ?

विराधगुप्त—अमात्य ! मारे तो नहीं गए, किन्तु ( उनके ) घर की सारी सम्पत्ति ले ली गई और ( उन्हें ) स्त्री-पुत्र सहित पकड कर कारागार में डाल दिया गया ।

राक्षस—तब क्या तुम सन्तुष्ट होकर कह रहे हो कि उन्होंने राक्षस के परिवार को दूर कर दिया । वस्तुतः ( यह ) कहना चाहिए कि स्त्री-पुत्र सहित राक्षस को पकड लिया गया ।

टिप्पणी—अस्माकममुमेवार्थम्—इसका तात्पर्य यह है कि जो लोग उपकारी स्वामी का कार्य सम्पन्न किये बिना उसका अनुगमन करते हैं, वे कृतघ्न कहलाते हैं। आप तो स्वामी का कार्य सिद्ध करने के लिए रह रहे हैं, इसलिए आप कृतघ्न नहीं हैं। एतदुपलभ्य—यह उपलब्ध करके अर्थात् जानकर। इसका तात्पर्य है शकटदास के शूलारोपण की घटना से। उपारूढसाध्वसेन—उपारूढ समुत्पन्न साध्वस भय यस्य स उपारूढसाध्वस बहुव्रीहि स०, तेन। अपवाहितम्—हटा दिया। अप√वह्+णिच+क्त कर्मणि। अयुक्ततर—अतिशयेन अनुचित। सुहृद्द्रोह—मित्र के विरुद्ध आचरण करना। सुष्ठु हृदयमस्य इति सुहृत् बहुव्रीहि स०, हृदयस्य हृदादेश। तस्य द्राह सुप्सुपा स०। गृहीतगृहसार—गृहस्य सार श्रेष्ठवस्तु गृहसार। गृहीत गृहसार यस्य स। बन्धनागारे—जेल में।√बध्+ल्युट् अधिकरणे = बन्धनम्। बन्धनञ्च तदागारञ्च कर्मधारय स०, तस्मिन्।

[ प्रविश्य पटाक्षेपेण पुरुष ] जेदु अमच्चो। अज्ज ! एसो क्खु सअडदासो पडिहारभूमिमुवत्थिदो ( जयत्वमात्य। आर्य ! एष खलु शकटदास प्रतिहारभूमिमुपस्थित। )

राक्षस—प्रियंवदक ! अपि सत्यम् ?

प्रियंवदक—किं अलिअं अमच्चपादेसु विणिवेदेमि ? ( किमलीकममात्यपादेषु विनिवेदयामि ?)

राक्षस—सखे ! विराधगुप्त ! कथमेतत् ?

राजा—अत्र तावदेवम् । राक्षस पुनरिहैवान्तर्नगरे वर्तमान आर्येणोपेक्षित इत्यत्र किमुत्तरमार्यस्य ?

चाणक्य—राक्षसोऽपि खलु निजस्वामिनि स्थिरानुरागत्वात् सुचिरमेकत्रवासाच्च शीलज्ञाना नन्दानुरक्ताना प्रकृतीनामत्यन्त विश्वास्य, प्रज्ञापुरुषकाराभ्यामुपेत सहायसम्पदा युक्त, कोपबलवानिहैवान्तर्नगरे वर्तमानो महान्त खल्वन्त कोपमुत्पादयेत् । दूरीकृतस्तु वाह्यकोपमुत्पादयन्नपि न दु खसाध्यो भविष्यतीत्यतोऽपक्रामन्नुपेक्षित ।

राजा—तत् किमर्थमिहस्थ एवोपायैर्नोपक्रान्त ?

चाणक्य—अथ कथमपक्रान्तो भविष्यति ? ननु उपायैरेवासौ हृदयेशय शङ्कुरिवोद्धृत्य दूरीकृत । दूरीकरणस्य चोक्त प्रयोजनम् ।

राजा—आर्य ! कस्माद्विक्रम्य न गृहीत ?

चाणक्य—वृषल ! राक्षस खल्वसौ विक्रम्य निगृह्यमाण स्वयं वा विनश्येत्, युष्मद्वलानि वा विनाशयेत् । एव सत्युभयथापि दोष । पश्य—

हिन्दी अनुवाद—राजा—आर्य ! इस विषय में बहुत पूछना है ।

चाणक्य—वृषल ! विश्वास के साथ पूछो । मुझे भी इस विषय मे बहुत कुछ कहना है ।

राजा—अभी पूछता हूँ ।

चाणक्य—मैं भी अभी कहता हूँ ।

राजा—यह जो हमारे इस सम्पूर्ण अनर्थ का कारण मलयकेतु है, उसको भागते हुए, आपने क्यो उपेक्षित कर दिया ?

चाणक्य—वृषल ! मलयकेतु के भागने की उपेक्षा न करने मे दो बाते होती, ( या तो उसे ) अनुगृहीत किया जाता या दंड दिया जाता । अनुग्रह करने पर पहले का प्रतिज्ञा किया हुआ आधा राज्य दे दिया जाता, निग्रह करने पर पर्वतक को हमने मारा है—इस कृतघ्नता को स्वयं सहारा देना होता । प्रतिज्ञा किये हुए आधे राज्य को दे देने पर भी पर्वतक का विनाश केवल कृतघ्नता-मात्र प्रयोजन को रखता । इसलिए भागते हुए मलयकेतु की उपेक्षा की गई ।

**राजा**—इस विषय में तो ऐसा (कहना ठीक) है। किन्तु राक्षस यही नगर के भीतर रहता हुआ आपके द्वारा उपेक्षित कर दिया गया, इस विषय में आपका क्या उत्तर है।

**चाणक्य**—राक्षस भी अपने स्वामी (नन्द) मे दृढ़ अनुराग रखने के कारण और चिरकाल तक एक जगह निवास करने के कारण शील को पहचानने वाली तथा नन्द के प्रति अनुरक्त प्रजाओं का अत्यन्त विश्वसनीय, बुद्धि और पराक्रम से सम्पन्न, सहायको की सम्पदा से युक्त और कोश-बल से संवलित होकर यही नगर के भीतर रहता हुआ महान् आन्तरिक विद्रोह को उत्पन्न कर देता। किन्तु दूर कर दिये जाने पर बाह्य विद्रोह को उत्पन्न करता हुआ भी कठिनाई से वश में करने योग्य नही होगा (अर्थात् आसानी से वश में किया जा सकेगा), इसलिए भागता हुआ उपेक्षित किया गया।

**राजा**—तब यही रहता हुआ (वह) क्यो नही उपायो से वश में कर लिया गया ?

**चाणक्य**—अब वह कैसे निकला हुआ रह सकेगा ? अरे ! उपायो से ही तो वह हृदय मे विद्यमान कांटे के समान निकालकर दूर कर दिया गया।

**राजा**—आर्य ! पराक्रम करके (अर्थात् शक्तिप्रयोग द्वारा) क्यो नही पकड़ लिया ?

**चाणक्य**—वह राक्षस शक्तिप्रयोग द्वारा पकड़ा जाता हुआ या तो स्वयं नष्ट हो जाता या तुम्हारी सेनाओं को विनष्ट कर देता। ऐसा होने पर दोनो प्रकार से हानि होती। देखो—

**टिप्पणी**—विश्रब्धम्—विश्वस्त यथा स्यात् तथा। क्रियाविशेषणमेतत्। आख्येयम्—वक्तव्यम्। अपक्रामन्—अपसरन्। उपेक्षितः—परित्यक्तः। अपक्रमणानुपेक्षणे—न उपेक्षणम् अनुपेक्षणम्। अपक्रमणस्य अनुपेक्षणम्, अपक्रमणानुपेक्षणम्, तस्मिन्। द्वयी गतिः—द्वौ पक्षौ। द्वौ अवयवौ यस्याः सा द्वयी अथवा द्वितयी द्वि+तयप्, 'द्वित्रिभ्यां तयस्यायज्वा' इत्यनेन अयजादेशस्य विकल्पात्। प्रतिपाद्येत—दीयेत। व्यापादितः—विनाशितः। कृतघ्नतायाः—विश्रम्भघातितायाः। कृतं हन्तीति कृतघ्नः कृत√हन्+क, तस्य भावः कृतघ्नता कृतघ्न+तल्—टाप्, तस्याः। स्वयम्—आत्मना। हस्तः—

अवलम्ब्य । प्रतिश्रुतार्धराज्यप्रदाने—प्रतिश्रुत प्रतिज्ञातम् अर्धराज्यम् राज्यार्धम् तस्य प्रतिपादनम् समर्पणम्, तस्मिन् । कृतघ्नतामात्रफल —अपकारितामात्रप्रयोजन । कृतघ्नतैव कृतघ्नतामात्रम् मयूरव्यंसकादित्वात् स०, तदेव फल यस्य तादृश बहुव्रीहि स० । अन्तर्नगरे—नगरस्य अन्त अन्तर्नगरम् 'राजदन्तादिषु परम्' इत्यनेन नगरशब्दस्य परनिपात , अथवा अन्त' स्थित नगरम् अन्तर्नगरम् मध्यमपदलोपी स०, तस्मिन् । स्थिरानुरागत्वात्—दृढप्रेमवशात् । स्थिर अनुराग अस्य इति स्थिरानुराग बहुव्रीहि स० । तस्य भाव इति स्थिरानुराग+त्व, तस्मात् हेतौ पञ्चमी । प्रज्ञापुरुषकाराभ्याम्—बुद्धिपौरुषाभ्याम् । प्रज्ञा च पुरुषकारश्च प्रज्ञापुरुषकारौ द्वन्द्व स० ताभ्याम् । उपेत —युक्त । सहायसम्पदा—साहाय्यकारिणा सम्पत्त्या । सह अयन्ते इति सह√अय्+अच् कर्तरि=सहाया । सम्√पद्+क्विप् भावे=सम्पत्=समृद्धि । सहायाना सम्पत्, तया । कोपबलवान्—अर्थसामर्थ्ययुक्त । कोप एव बलम् मयूरव्यंसकादि स० । तत् अस्ति अस्य इति कोपबल+मतुप् । अन्त कोपम्—अन्त मध्ये प्रकृतिषु इत्यर्थ कोप अपराग । अन्त कोप सुप्सुपा स०, तम् । बाह्यकोपम्—बहिर्विद्वेषम् । बहिर्भव बाह्य बहिस्+यञ्, टिलोप 'बहिषष्टिलोपो यञ्च' इत्यनेन । बाह्य कोप बाह्यकोप कर्मधारय स०, तम् । न दु खसाध्य —न क्लेशप्राप्य । हृदयेशय —मनोवर्ती । हृदये शेते इति हृदये√शी+अच् कर्तरि, 'शयवासवासिष्वकालात्' इत्यनेन सप्तम्या अलुक् । उद्धृत्य—उत्पाट्य । उद्√धृ+क्त्वा—ल्यप् । विक्रम्य—सामर्थ्येन । वि√क्रम्+क्त्वा—ल्यप् । निगृह्यमाण —ध्रियमाण । नि√ग्रह्+लट् कर्मणि—शानच् ।

स हि भृशमभियुक्तो यद्युपेयाद् विनाश
ननु वृषल वियुक्तस्तादृशेनासि पुसा ।
अय तव वनमुख्यान्नाशयेत् सापि पीडा
नवगज इव तस्मात् सोऽभ्युपायैर्विनेय ॥ २५ ॥

अन्वय —ननु वृषल ! भृशम् अभियुक्त स यदि विनाशम् उपेयात् तादृशेन पुसा वियुक्त असि, अय तव वनमुख्यान् नाशयेत् सा अपि पीडा । तस्माद् स वनगज इव अभ्युपायै विनेय ॥ २५ ॥

**व्याख्या**—ननु वृषल ! अयि मौर्य !, भृशम्—अत्यर्थम्, अभियुक्तः—मत्सैन्यैराक्रान्तः सः—राक्षसः, यदि—चेत्, विनाशम्—मरणम्, उपेयात्—प्राप्नुयात्, तादृशेन—तथाविधेन लोकोत्तरगुणशालिना, पुंसा—पुरुषेण, वियुक्तः—विरहितः, असि—भवसि । अथ—यदि, तव—ते, बलमुख्यान्—सेनानायकान्, नाशयेत्—हन्यात्, सा अपि—विनाशक्रियापीत्यर्थः, पीडा—क्षतिः, तस्मात्—अतः, सः—राक्षसः, वनगज इव—आरण्यकहस्तीव, अभ्युपायैः—युक्तिभिः, विनेयः—वशीकार्यः ॥ २५ ॥

**हिन्दी अनुवाद**—हे वृषल ! (हमारी सेनाओं से) अत्यंत आक्रान्त होकर वह (राक्षस) यदि मृत्यु को प्राप्त हो जाए तो तुम वैसे (गुणशाली) पुरुष से वियुक्त हो जाते हो। (और) यदि तुम्हारे सेनानायकों को मार दे तो वह भी क्षति है। इसलिए उसको जंगली हाथी की तरह युक्तियों से वश में करना चाहिए ॥ २५ ॥

**टिप्पणी**—सा अपि—अत्र विधेयप्राधान्यात् स्त्रीलिङ्गता । वनगजः—वनचरो गजः वनगजः मध्यमपदलोपी स० । अभ्युपायैः—साम, दान आदि उपायों से, गज-पक्ष में—वशीकरण के साधनों से । इस पद्य में उपमा अलंकार है, प्रसाद गुण है, वैदर्भी रीति है और मालिनी छन्द है । इस छन्द का लक्षण ३, १५ में देखिए ॥ २५ ॥

**राजा**—न शक्नुमो वयमार्यस्य वाचा वाचमतिशयितुं । सर्वथाऽमात्यराक्षस एवात्र प्रशस्यतरः ।

**चाणक्यः**—[सक्रोधम्] न भवानिति वाक्यशेषः । भो वृषल ! तेन किं कृतम् ?

**राजा**—यदि न ज्ञायते, तदा श्रूयताम् । तेन खलु महात्मना—

लब्धायां पुरि यावदिच्छमुषितं कृत्वा पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः ।
अत्यर्थं विपुलैः स्वनीतिविभवैः सम्मोहमापादिता
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः ॥ २६ ॥

**अन्वयः**—नः गले पदं कृत्वा लब्धायां पुरि यावदिच्छम् उषितम्,

अस्मद्बलाना जयघोषणादिषु बलात् व्याघात कृत, विपुलै स्वनीतिविभवै अत्यर्थं सम्मोहम् आपादिता न मतय विश्वास्येष्वपि स्वेषु वर्गेषु न विश्वसन्ति ॥ २६ ॥

व्याख्या—न—अस्माक, गले—कण्ठे, पद—चरण, कृत्वा—विधाय, लब्धाया—प्राप्ताया, पुरि—नगर्यां, यावदिच्छम्—यथारुचि, उषितम्—निवास कृत, अस्मद्बलानाम्—अस्माक सैन्याना, जयघोषणादिषु—विजयप्रख्यापनप्रभृतिषु, बलात्—हठात्, व्याघात —विघ्न, कृत —उत्पादित, विपुलै —महद्भि, स्वनीतिविभवै —स्वस्य आत्मन नीतय नया एव विभवा सम्पद तै, अत्यर्थम्—अत्यन्त, सम्मोहम्—अविवेकम्, आपादिता —प्रापिता, न —अस्माक, मतय —बुद्धय, विश्वास्येष्वपि—आप्तेषु च, स्वेषु—स्वकीयेषु, वर्गेषु—पक्षेषु, न विश्वसन्ति—न प्रतियन्ति ॥ २६ ॥

हिंदी अनुवाद—राजा—हम आप की बात को बात से नही जीत सकते। (किन्तु) इस विषय मे अमात्य राक्षस ही सब प्रकार से अधिक प्रशसनीय है।

चाणक्य—[ क्रोध के साथ ] आप नही, यह कहना शेष रह गया। हे वृषल! उसने क्या किया ?

राजा—यदि नही जानते हैं तो सुनिए। उस महात्मा ने—

हमारे गले पर पैर रख कर (हमारी) जीती हुई नगरी मे इच्छानुसार निवास किया, हमारी सेनाओ की विजय-घोषणा आदि मे हठात् विघ्न उत्पन्न किया और महान् अपनी नीति के वैभव से हमारी बुद्धियो को अत्यत मोह मे डाल दिया, जिससे वे (हमारी बुद्धियाँ) अपने विश्वसनीय व्यक्तियो पर भी विश्वास नही करती हैं ॥ २६ ॥

टिप्पणी—अतिशयितुम्—उल्लङ्घयितुम्। प्रशस्यतर —अधिक श्रेष्ठ। अतिशयेन प्रशस्य इति प्रशस्यतर प्रशस्य+तरप्। महात्मना—महान् आत्मा यस्य स महात्मा, तेन। न गले पद कृत्वा—हमारे कठ पर पैर रखकर अर्थात् हमारी अवहेलना करके। यह लोकोक्ति है। बलात्—अत्र हेतौ ल्यब्लोपे कर्मणि वा पञ्चमी। स्वेषु वर्गेषु—भद्रभटादिषु। इस श्लोक मे दीपक, अति-

शयोक्ति और उदात्त अलंकारो की संसृष्टि है। इसमें शार्दूलविक्रीडित छन्द है। इस छन्द का लक्षण १, १२ मे देखिए ॥ २६ ॥

**चाणक्यः**—[विहस्य] वृषल ! एतत् कृतं राक्षसेन ?

**राजा**—अथ किम् ? एतत् कृतममात्यराक्षसेन।

**चाणक्यः**—वृषल ! मया पुनर्ज्ञातं, नन्दमिव भवन्तमुद्धृत्य भवानिव भूतले मलयकेतुरधिराज्यमारोपितः।

**राजा**—अलमुपालभ्य। आर्य ! दैवेनेदमनुष्ठितम्। किमत्रार्यस्य ?

**चाणक्य**—हे मत्सरिन् !

आरुह्यारूढकोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूडां
लोकप्रत्यक्षमुग्रां सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञाम्।
केनान्येनावलिप्ता नवनवतिशतद्रव्यकोटीश्वरास्ते
नन्दाः पर्यायभूताः पशव इव हताः पश्यतो राक्षसस्य ॥२७॥

**अन्वयः**—केन अन्येन लोकप्रत्यक्षम् आरूढकोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूडाम् उग्रां सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञाम् आरुह्य अवलिप्ताः नवनवतिशतद्रव्यकोटीश्वराः ते नन्दाः पर्यायभूताः पशव इन पश्यतो राक्षसस्य हताः ? ॥ २७ ॥

**व्याख्या**—केन अन्येन—मदतिरिक्तेन केन जनेन, लोकप्रत्यक्षम्—जगतः समक्षम्, आरूढकोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूडाम्—आरूढः सञ्जातः यः कोपः क्रोधः तस्य स्फुरणेन आवेशेन विपमिताः कुटिलीभूताः या आग्राङ्गुल्यः अङ्गुल्यग्राणि तैः मुक्ता बन्धनात् च्याविता चूडा शिखा यस्यां तादृशीम्, उग्रां—कठिनां, सकलरिपुकुलोच्छेददीर्घाम्—सकलस्य निखिलस्य रिपुकुलस्य शत्रुवंशस्य उच्छेदेन विनाशेन दीर्घा महती, प्रतिज्ञाम्—प्रतिश्रुतिम्, आरुह्य—विधाय, अवलिप्ताः—साभिमानाः, नवनवतिशतद्रव्यकोटीश्वराः—नवनवतिशतानाम् द्रव्यकोटीनाम् वित्तकोटीनाम् ईश्वराः पतयः, ते—प्रसिद्धाः, नन्दाः, पर्यायभूताः—क्रमेण उपस्थिताः, पशव इव—बलिच्छागला इव, पश्यतः—अवलोकयतः, राक्षसस्य—नन्दामात्यस्य पश्यन्तं राक्षसमनादृत्येत्यर्थः, हताः—हिंसिताः ? ॥ २७ ॥

हिन्दी अनुवाद—चाणक्य—[ हँसकर ] वृषल ! राक्षस ने यह किया ?

राजा—और क्या ? यह अमात्य राक्षस ने किया।

चाणक्य—वृषल ! मैंने पुन समझा कि नन्द के समान तुम्हें उखाड़कर पृथ्वी पर तुम्हारी तरह मलयकेतु को (उसने) सिंहासन पर बैठा दिया।

राजा—उलाहना देना व्यर्थ है। आर्य ! भाग्य ने यह किया। इसमें आपका क्या है ?

चाणक्य—हे डाह रखने वाले ! ।

दूसरे किसने लोगों के सामने उत्पन्न क्रोध के आवेश से टेढ़ी अंगुलियों के अग्रभाग से खोली गई शिखा वाली, भयंकर तथा सम्पूर्ण शत्रु-कुल के विनाश करने के कारण लम्बी प्रतिज्ञा को करके अभिमानी तथा निन्यानवे सौ करोड़ मुद्राओं के स्वामी नन्दों को क्रमशः बलि-पशु के समान राक्षस के देखते मार दिया ॥ २७ ॥

टिप्पणी—उद्धृत्य—उन्मूल्य । अधिराज्यम्—राज्ये इति अधिराज्यम् अव्ययीभाव स०, 'अव्ययीभावश्च' इत्यनेन नपुंसकत्वम्। आरोपित —स्थापितः। मत्सरिन् !—मत्सर = डाह। 'मत्सरोऽन्यशुभद्वेषे' इत्यमर। स अस्ति अस्य इति मत्सर + इनि। विषमिता —विषमाः कृताः इति विषमा + णिच् + क्त कर्मणि। नवनवतिशतद्रव्यकोटीश्वरा —नवाधिका नवति नवनवति शाकपार्थिवादित्वात् स०। तत्सख्यकानि शतानि शाकपा०। द्रव्याणां कोट्य द्रव्यकोट्य। नवनवतिशतसख्याका द्रव्यकोट्य शाकपा०। तासाम् ईश्वरा। पर्यायभूता —परि √ अय् + घञ् भावे = पर्याय। पर्यायेण भूता. तृतीयातत्० वा सुप्सुपा स०। राक्षसस्य—अत्र 'षष्ठी चानादरे' इति षष्ठी। इस श्लोक मे अर्थापत्ति और उपमा अलकार हैं। इसमें ओज गुण है, गौड़ी रीति है और स्रग्धरा छन्द है। स्रग्धरा का लक्षण १, १ में देखिए ॥ २७ ॥

अपि च,

गृध्रैराबद्धचक्रं वियति विचलितैर्दीर्घनिष्कम्पपक्षै-
र्धूमैर्ध्वस्तार्कभासा सघनमिव दिशां मण्डलं दर्शयन्तः।

नन्दैरानन्दयन्तः पितृवननिलयान् प्राणिनः पश्य चैतान्
निर्वान्त्यद्यापि नैते स्रुतबहलवसावाहिनो हव्यवाहाः ।। २८।।

**अन्वयः**—पश्य, दीर्घनिष्कम्पपक्षैः आबद्धचक्रं वियति विचलितैः गृध्रैः धूमैः ध्वस्तार्कभासां दिशां मण्डलं सघनमिव दर्शयन्तः पितृवननिलयान् एतान् प्राणिनः नन्दैः आनन्दयन्तः एते स्रुतबहलवसावाहिनः हव्यवाहाः अद्यापि न निर्वान्ति ।। २८ ।।

**व्याख्या**—पश्य—अवलोकय, दीर्घनिष्कम्पपक्षैः—दीर्घाः आयताः निष्कम्पाः निश्चलाश्च ये पक्षाः दलाः तैः करणभूतैः, आबद्धचक्रं—आबद्धानि कृतानि चक्राणि मण्डलानि यस्मिन् कर्मणि तत् यथा स्यात् तथा, वियति—गगने, विचलितैः—भ्रमद्भिः, गृध्रैः धूमैः—गृध्ररूपधूमैः, ध्वस्तार्कभासां—ध्वस्ताः तिरोहिताः अर्कभासः—सूर्यकिरणाः यासु तासां, दिशाम्—आशानां, मण्डलं—चक्रवालं, सघनमिव—समेघमिव, दर्शयन्तः—अवभासयन्तः, पितृवननिलयान्—पितृवनं श्मशानं निलयः आवासः येषां ते तथोक्ताः तान्, एतान्, प्राणिनः—जीवान्, नन्दैः—बहलवसादशिष्टैः, आनन्दयन्तः—प्रीणयन्तः, एते—इमे, स्रुतबहलवसावाहिनः—स्रुताः क्षरिताः याः बहलाः प्रचुराः वसाः मज्जाः ताः ये वाहयन्ति स्रोतःक्रमेण निःसारयन्ति तादृशाः, हव्यवाहाः—वह्नयः चिताग्नय इत्यर्थः, अद्यापि—अधुनापि, न निर्वान्ति—न प्रशाम्यन्ति ।। २८ ।।

**हिन्दी अनुवाद**—और भी, देखो, लम्बे और निश्चल पंखों से मंडल बनाकर आकाश में उड़ते हुए गृध्र रूपी धुओं से छिपी हुई सूर्य-किरणों वाली दिशाओं के समूह को मानों मेघों से आच्छादित दिखलाती हुई और श्मशान में रहने वाले इन प्राणियों को नन्दों से तृप्त करती हुई ये पिघली हुई अत्यधिक चर्बी को बहाने वाली अग्नियाँ आज भी शान्त नहीं हो रही है ।। २८ ।।

**टिप्पणी**—सघनम्—मेघयुक्त। घनेन सहितम् इति सघनम् 'तेन सहेति'—बहुव्रीहि स०। नन्दैः—अत्र करणे तृतीया। स्रुतबहलवसावाहिनः—स्रुतबहलवसा√वह्+णिच्+णिनि कर्तरि साधुकारिणि। हव्यवाहाः—अग्नि। हव्यं वहन्ति देवेभ्यः प्रापयन्ति इति हव्य√वह्+अण् कर्तरि। निर्वान्ति—बुझती हैं। निर्√वा+लट्+अन्ति। इस श्लोक में भाविक अलंकार उत्प्रेक्षा से संसृष्ट है। इसमें भी स्रग्धरा छन्द है ।। २८ ।।

नयनकान्त्या, भ्रूभङ्गोद्भेदधूम—भ्रूभङ्गस्य भ्रुकुटे य उद्भेद आविर्भाव स एव धूमो यत्र तत् यथा स्यात् तथा, पुर —अग्रे, ज्वलितमिव—प्रदीप्तमिव। मन्ये—शङ्के, ताण्डवे—उद्धतनृत्ये, रौद्र रसम्—क्रोधात्मक रसम्, अभिनयत —(अभिनीय) दर्शयत , रुद्रस्य—शिवस्य, सस्मरन्त्या—सम्यक् स्मृतिम् अनुभवन्त्या, धरया—पृथिव्या, पादघात —चरणप्रहार , कथमपि—केनापि प्रकारेण, सञ्जातोदग्रकम्प—सञ्जात समुत्पन्न उदग्र विशेष कम्प यस्मिन् कर्मणि तत् यथा स्यात् तथा, धारित अवस्थापित ॥ ३० ॥

हिन्दी अनुवाद—राजा [ आवेग के साथ मन में ] तब क्या सचमुच ही आर्य कुपित हो गए ? क्योंकि—

क्रोध से कम्पायमान पलकों से झरते हुए स्वच्छ जल से धोने के कारण क्षीण होने पर भी लाल नेत्रकिरणों से तनी हुई भ्रुकुटिरूपी धुआ मानो सामने प्रदीप्त हुआ है। मैं समझता हूँ कि ताण्डव नृत्य के समय रौद्र रस का अभिनय करते हुए शकर का स्मरण करती हुई पृथ्वी ने ( आर्य चाणक्य का ) पाद-प्रहार उत्पन्न विशेष कम्पन के साथ बड़ी कठिनाई से सहन किया है ॥ ३० ॥

टिप्पणी—स्पन्दि—स्पन्दते इति/स्पन्द्+णिनि साधुकारिणि कर्तरि। भ्रूभङ्गोद्भेद=उद्भिन्न भ्रूभङ्ग, 'आयानयन द्रव्यायनम्'। पुर —आखो के सामने। धुआ आग से ऊपर रहता है। यहाँ भी भृकुटी रूपी धुआ नेत्राग्नि से ऊपर है। रुद्रस्य—अत्र अधीगर्थदयेशां कर्मणि' इत्यनेन षष्ठी। उदग्र—उद्गतमग्रमस्य इति उदग्र। इस श्लोक में रूपक और उत्प्रेक्षा अलकारों में साकय होने से सकर अलकार है। इसमें पाञ्चाली गीति है, ओज गुण है और स्रग्धरा छन्द है। इसका लक्षण १, १ में देखिए ॥३०॥

चाणक्य —[ कृतक कोप सहृत्य ] वृषल! वृषल! अलमुत्तरोत्तरेण। यद्यस्मत्तो वरीयान् राक्षसोऽवगम्यते, तस्मादिद शस्त्र तस्मै दीयतामिति। [शस्त्रमुत्सृज्य उत्थाय च आकाशे लक्ष्य बद्ध्वा स्वगतम्] राक्षस! राक्षस! एष भवत कौटिल्यबुद्धिविजिगीषोर्बुद्धे प्रकर्ष ।

> चाणक्यत स्खलितभक्तिमह सुखेन
> जेष्यामि मौर्यमिति सम्प्रति य प्रयुक्त ।

भेदः किलैष भवता सकलः स एव
सम्पत्स्यते शठ तवैव हि दूषणाय ।। ३१ ।।

[ इति निष्क्रान्तः । ]

**अन्वयः**—शठ ! चाणक्यतः स्खलितभक्ति मौर्यम् अहं सुखेन जेष्यामि इति सम्प्रति भवता यः एष भेदः किल प्रयुक्तः स सकल एव तवैव दूषणाय सम्पत्स्यते हि ।।३१।।

**व्याख्या**—शठ !—धूर्त !, चाणक्यतः—कौटिल्यात्, स्खलितभक्ति—स्खलिता त्यक्ता भक्तिः स्नेहः यस्य तादृशं, मौर्यम्—वृपलम्, अहं—राक्षसः, सुखेन—अनायासेन, जेष्यामि—वशीकरिष्यामि, इति—अतो हेतोः, सम्प्रति—अधुना, भवता—त्वया, य एष, भेदः—उपजापः, किल, प्रयुक्तः—विहितः, सः, सकल एव—सम्पूर्ण एव, तवैव—भवत एव, दूषणाय—दोषाय मलयकेतोर्भेदायेत्यर्थः, सम्पत्स्यते हि—नूनं भविष्यति ।।३१।।

**हिन्दी अनुवाद**—चाणक्य—[ कृत्रिम क्रोध को त्यागकर ] वृषल ! वृषल ! उत्तर-प्रत्युत्तर करना व्यर्थ है। यदि ( तुम ) राक्षस को मुझसे श्रेष्ठ समझते हो तो यह शस्त्र उसको दे दो। [ शस्त्र छोड़कर, उठकर और आकाश में दृष्टि बाँधकर मन में ] राक्षस ! राक्षस ! यह चाणक्य की बुद्धि को जीतने की इच्छुक तुम्हारी बुद्धि का वैभव है ( अर्थात् इतनी ही तुम्हारी बुद्धिसम्पदा है, इससे तुम चाणक्य की बुद्धि को नहीं जीत सकते हो )।

हे धूर्त ! चाणक्य से शिथिल-भक्ति चन्द्रगुप्त को मैं आसानी से जीत लूँगा—ऐसा समझकर तुमने जो इस भेद ( -नीति ) का प्रयोग किया है, वह सम्पूर्ण ( भेद-प्रयोग ) ही तुम्हारे ही दोप ( विनाश ) के लिए निश्चित रूप से होगा ।।३१।।

[ बाहर चला जाता है। ]

**टिप्पणी**—कृतककोपम्—बनावटी क्रोध। कृत एव कृतकः कृत+कन्। कृतकः कोपः कर्मधारय स०, तम्। उत्तरोत्तरेण—उत्तरति अनेन इति उद्√तृ+अप् करणे=उत्तरम्। उत्तरस्य उत्तरम्, तेन, करणे तृतीया। वरीयान्—श्रेष्ठ। अतिशयेन उरुः इति उरु+ईयसुन्, वरादेश। स्खलितभक्तिम्—स्खलितं भक्तिरस्य इति स्खलितभक्तिः, तम्। सामान्ये नपुंसकम्। दूषणाय—

√दुष्+णिच्+ल्युट् भावे, 'दोषो णौ' इत्यनेन ऊत्वम् = दूषणम्, तस्मै। 'तुमर्थाच्च भाववचनात्' इति सूत्रेण चतुर्थी अथवा 'क्लृपि सम्पद्यमाने च' इति वार्तिकेन चतुर्थी। इस श्लोक मे विषमालङ्कार है, प्रसाद गुण है, वदर्भी रीति है और वसन्ततिलका छन्द है। इस छन्द का लक्षण १, ८ मे देखिए ॥३१॥

राजा—आर्य वैहीनरे! अद्य प्रभृत्यनादृत्य चाणक्य चन्द्रगुप्त स्वयमेव राज्यकार्याणि करिष्यतीति गृहीतार्था प्रकृतय क्रियन्ताम्।

कञ्चुकी—[स्वगतम्] कथ निरुपपद एव चाणक्यो नार्यचाणक्य इति। हन्त! सत्यमेव हृतोऽधिकार। अथवा न खल्वत्र वस्तुनि देवदोष। कुत—

स दोष सचिवस्यैव यदसत् कुरुते नृप।
याति यन्तु प्रमादेन गजो व्यालत्ववाच्यताम् ॥ ३२ ॥

अन्वय—नृप यत् असत् कुरुते स सचिवस्यैव दोष। यन्तु प्रमादेन गज व्यालत्ववाच्यता याति ॥३२॥

व्याख्या—नृप—राजा, यत्, असत्—अयुक्तम् अमात्यतिरस्कारादिरूप कार्यमिति यावत्, कुरुते—विदधाति, स, सचिवस्यैव—अमात्यस्यैव, दोष—अपराध न तु राज्ञ इत्यर्थ। यन्तु—हस्तिपकस्य, प्रमादेन—अनवधानतया, गज—हस्ती, व्यालत्ववाच्यता—व्यालत्वेन दुष्टगजत्वेन वाच्यता निन्दनीयता, याति—प्राप्नोति ॥३२॥

हिन्दी अनुवाद—राजा—आर्य वैहीनरि! आज से चाणक्य का अनादर करके चन्द्रगुप्त स्वय ही राज-काज करेगा—इस बात से प्रजाओ को अवगत करा दो।

कञ्चुकी—[मन में] क्यो बिना (किसी) आदरसूचक विशेषण के ही 'चाणक्य' (कहा), 'आर्य चाणक्य' नही (कहा)। हाय! सचमुच अधिकार छीन लिया। अथवा इस विषय मे महाराज का दोष नहीं है। क्योकि—

राजा जो अनुचित (कार्य) करता है, वह मत्री का ही दोष है। (क्योकि) महावत की असावधानी से हाथी दुष्ट हाथी होने की निन्दा को प्राप्त होता है ॥३२॥

टिप्पणी—इति गृहीतार्था—इति अनेन प्रकारेण गृहीत परिज्ञात

अर्थः वस्तु याभिः, ताः। निरुपपदः—समीपोच्चारित (आदरसूचक) शब्द से रहित। उपोच्चारितं पदम् उपपदम् निरस्तम् उपपदम् अस्मात् इति निरुपपदः। असत् कुरुते—अनुचित (कार्य) करता है। अथवा 'असत्कुरुते' इति पाठः। सत् इति आदरार्थकमव्ययम्। अविद्यमानं सत् अस्मिन् इति असद। असत् कुरुते इति असत्√कृ+लट्—ते। व्यालत्ववाच्यताम्—व्यालः= दुष्ट हाथी। 'व्यालो दुष्टगजे सर्पे' इति हैमः। तस्य भावः इति व्यालत्वम् व्याल+त्व। वक्तुमर्हः इति वाच्यः√वच्+ण्यत् कर्मणि। तस्य भावः वाच्यता वाच्य+तल्—टाप्। व्यालत्वेन व्यालत्वमेव वा वाच्यता। इस श्लोक में दृष्टान्त अलंकार है और अनुष्टुप् छन्द है। इसका लक्षण १, ३ में देखिए॥ ३२॥

राजा—आर्य! किं विचारयसि?

कञ्चुकी—देव! न किञ्चिद्विचारयामि, किन्तु एतद्विज्ञापयामि, दिष्ट्या देव इदानीं देवः संवृत्त इति।

राजा—[आत्मगतम्] एवमस्मासु गृह्यमाणेषु स्वकार्यसिद्धिकामः, सकामो भवत्वार्यः। [प्रकाशम्] शोणोत्तरे! अनेन शुष्ककलहेन शिरोवेदना मां बाधते, तच्छयनगृहमादेशय।

प्रतीहारी—एदु एदु महाराओ। (एतु एतु महाराजः।)

राजा—[आसनादुत्थायात्मगतम्]

आर्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमवनेर्विवरं प्रवृत्ता।
ये सत्यमेव न गुरून् प्रतिमानयन्ति
तेषा कथं नु हृदयं न भिनत्ति लज्जा॥ ३३॥

[इति निष्क्रान्ताः सर्वे।]

॥ इति तृतीयोऽङ्कः॥

**अन्वयः**—आर्याज्ञया एव लङ्घितगौरवस्य मम अवनेः विवरं प्रवेष्टुं बुद्धिः प्रवृत्ता। ये सत्यमेव गुरून् न प्रतिमानयन्ति तेषां हृदयं लज्जा कथं नु न भिनत्ति?॥ ३३॥

व्याख्या—आर्याज्ञया एव—आर्यस्य पूज्यस्य चाणक्यस्य आज्ञया एव आदेशेनैव, लङ्घितगौरवस्य—लङ्घितम् अतिक्रान्तम् गौरवम् प्रतिष्ठा यन तादृशस्य, मम—मे, अवने —पृथिव्या , विवर—रन्ध्र, प्रवेष्टुम्—अन्तर्गन्तुम्, बुद्धि —मति , प्रवृत्ता—उद्यता । ये—जना , सत्यमेव—यथार्थमेव, गुरून्—पूज्यान्, न प्रतिमानयन्ति—न सत्कुर्वन्ति, तेषा—जनाना, हृदय—चित्त, लज्जा—त्रपा, कथ नु—कस्मात् न, भिनत्ति—विदारयति ? ॥ ३३ ॥

हिन्दी अनुवाद—राजा—आर्य ! क्या सोच रहे हो ?

कञ्चुकी—महाराज ! कुछ नही सोच रहा हूँ, किन्तु यह निवेदन करता हूँ कि भाग्य से महाराज अब महाराज हो गए ।

राजा—[ मन में ] इस प्रकार हमारे समझे जाने पर ( अर्थात् जब लोग मेरे और चाणक्य के कृतककलह को यथार्थ समझने लगे तब) अपने कार्य की सिद्धि चाहने वाले आर्य पूर्णकाम हो । [ प्रकट ] शोणोत्तरे ! इस सूखे विवाद से सिर की वेदना मुझे पीडित कर रही है । इसलिए शयनकक्ष में ले चलो ।

प्रतीहारी—आवें महाराज ! आवें ।

राजा—[ आसन से उठकर मन में ] आर्य ( चाणक्य ) की आज्ञा से ही मर्यादा का अतिक्रमण करने वाली मेरी बुद्धि पृथ्वी के बिल में पैठने को तैयार हो गई है । जो यथार्थ में ही गुरुओं का सत्कार नही करते हैं, उनके हृदय को लज्जा क्यों नही विदीर्ण कर देती है ? ॥ ३३ ॥

[सभी (पात्र) बाहर चले जाते हैं ।]

॥ तीसरा अक समाप्त ॥

टिप्पणी—गृह्यमाणेषु—प्रतीयमानेषु । स्वकार्यसिद्धिकाम —स्वस्य कार्यं, तस्य सिद्धि , ता कामयत तादृश । सकाम —सिद्धमनोरथ । शुष्ककलहेन—शुष्क कलह कर्मधारय स०, तेन, हेतौ तृतीया । शिरोवेदना—मस्तकपीडा । प्रतिमानयन्ति - पूजयन्ति । प्रति√मान् ( पूजायाम् )+णिच्+लट्—अन्ति । इस श्लोक के प्रथम चरण में परिसंख्या अलकार पदार्थहेतुक काव्यलिंग अलकार से संसृष्ट है । दूसरे चरण में पदार्थहेतुक काव्यलिंग

अलंकार है। तीसरे और चौथे चरण में अर्थापत्ति अलंकार है। इसमें वसन्ततिलका छन्द है। इस छन्द का लक्षण १, ८ में देखिए ।। ३२ ।।

---

## चतुर्थोऽङ्कः

[ ततः प्रविशत्यध्वगवेषः पुरुषः । ]

पुरुषः—हीमाणहे हीमाणहे । (आश्चर्यमाश्चर्यम् ।)

जोअणसअं समधिअं को णाम गदागदं इह करेइ ।
अत्थाणगमणगुरुई प्पहुणो अण्णा जइ ण होइ ।। १ ।।
(योजनशतं समधिकं को नाम गतागतमिह करोति ।
अस्थानगमनगुरुका प्रभोराज्ञा यदि न भवति ।। १ ।।)

अन्वयः—अस्थानगमनगुरुका प्रभोः आज्ञा यदि न भवति को नाम इह समधिकं योजनशतं गतागतं करोति ? ।। १ ।।

व्याख्या—अस्थानगमनगुरुका—अस्थाने अनवसरे यत् गमनं तेन गुरुका गुर्वी प्रभोः स्वामिनः, आज्ञा—आदेशः, यदि—चेत्, न भवति—न जायते, ( तदा ) को नाम—न कोऽपीत्यर्थः, इह—अस्मिन् संसारे, समधिकं—संगतम् अधिकं यस्मिन् तत्, योजनशतं—शतयोजनमित्यर्थः, ( व्याप्य ) गतागतं—गतं गमनम् आगतम् आगमनञ्च, करोति—विदधाति ? ।। १ ।।

हिन्दी अनुवाद—[ तब पथिक-वेष में एक पुरुष प्रवेश करता है । ]

पुरुष—आश्चर्य है, आश्चर्य है ।

असमय में जाने के कारण महान् ( अर्थात् अनुल्लंघनीय ) स्वामी की आज्ञा यदि न हो तो कौन ( व्यक्ति ) यहाँ सौ योजन से भी अधिक दूर जाना-आना करता है ? ।। १ ।।

टिप्पणी—अध्वगवेषः—पथिकवेशधारी । अध्वानं गच्छति इति अध्वन्√गम्+ड कर्तरि । तस्य वेषः । अध्वगवेष इव वेषः अस्य इति बहुव्रीहि स० । हीमाणहे—यह आश्चर्यसूचक निपात—अव्यय है । समधिकम्—सङ्गतम्

अधिकेन प्रादितत्० अथवा मद्भुतम् अधिक यस्मिन् तत् समधिकम् 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोप ' इति वार्तिकेन बहुव्रीहि स० गतपदलोपश्च। योजनशतम्—योजनाना शतम्। समधिक योजनशतम्=समधिकयोजनशत-परिमितम्। गतागतम्—गतञ्च आगतञ्च अनयो समाहारद्वन्द्वसमास। इस पद्य मे वाक्यार्थहेतुक काव्यलिंग अलकार है। इसमे आर्या छन्द है। आर्या का लक्षण १, ५ मे देखिए ॥ १ ॥

ता जाव अमच्चरक्खसस्स ज्जेव गेहं गच्छामि। [ परिश्रान्तवत् परिक्रम्य ] भो! को एत्थ दुआरिआण? णिवेदेह दाव भट्टिणो अमच्च-रक्खसस्स, एसो क्खु करहको करहक विअ कज्ज तुवरन्तो पाडलिपुत्तादो आगदो त्ति। ( तद्यावदमात्यराक्षसस्यैव गेह गच्छामि। भो! कोऽत्र दौवारिकाणाम्? निवेदय तावद् भर्तु अमात्यराक्षसस्य 'एप खलु कर-भक करभक इव कार्यं त्वरयन् पाटलिपुत्रादागत ' इति।)

दौवारिक—[ प्रविश्य ] भद्द! मा उच्च मन्तेहि, एसो अमच्चो भट्टा कज्जचिन्ताजणिदेण जाअरेण समुप्पणसीसवेअणो, अज्ज वि दाव ण सअणदल मुञ्चदि, ता चिट्ठ दाव मुहुत्तअ, जाव से लद्धावसरो भविअ भवदो आगमण णिवेदेमि। ( भद्र! मा उच्चैर्मन्त्रय, एप खलु भर्ता अमात्यराक्षस कार्यचिन्ताजनितेन जागरणेन समुत्पन्नशीर्षवेदनोऽद्यापि तावत् न शयनतल मुञ्चति, तस्मात् तिष्ठ तावन्मुहूर्तं, यावत् तस्य लब्धावसरो भूत्वा भवत आगमन निवेदयामि।)

पुरुष—भद्दमुह! जधा दे रोअदि। ( भद्रमुख! यथा ते रोचते।)

[ तत प्रविशन्ति शयनगत आसनस्थेन शकटदासेन सह चिन्तितो राक्षस। ]

राक्षस—[ आत्मगतम् ]

हिन्दी अनुवाद—तो अब अमात्य राक्षस के ही घर मे जाता हूँ। [ थके हुए की तरह घूमकर ] अजी! यहा द्वारपालो मे से कौन है? स्वामी अमात्य राक्षस से निवेदन कर दो कि यह करभक हाथी के बच्चे के समान कार्य को शीघ्रता से सम्पन्न करते हुए पाटलिपुत्र से आ गया है।

द्वारपाल—[ प्रवेश करके ] भद्र! जोर से मत बोलो। ये स्वामी अमात्य

राक्षस कार्यों की चिन्ता के कारण जागते रहने से उत्पन्न सिर-पीड़ा से पीड़ित होकर अभी भी शय्या को नही छोड रहे है। इसलिए क्षण भर ठहरो, जब तक कि मैं अवसर पाकर तुम्हारे आने की सूचना दे दूँ।

**पुरुष**—भद्रमुख ! जैसी तुम्हारी इच्छा।

**[ तब पलंग पर लेटे चिन्तामग्न राक्षस आसन पर बैठे शकटदास के साथ प्रवेश करता है। ]**

**राक्षस**—[ मन में ]

**टिप्पणी**—दौवारिकाणाम्—द्वारत्राणनियुक्तानाम्। द्वारे नियुक्ताः इति द्वार+ठक्—इक, 'द्वारादीनां च' इत्यनेन ऐजागमः। करभक इव—गजशावक इव। त्वरयन्—शीघ्रं साधयन्। √त्वर्+णिच्+शतृ। पाटलिपुत्रात्—कुसुमपुरात्। पुत्रक नामक राजा ने इस नगरी की स्थापना की थी। इसी का आधुनिक नाम पटना है। समुत्पन्नशीर्षवेदनः—शीर्षस्य शीर्षे वा वेदना शीर्षवेदना। समुत्पन्ना शीर्षवेदना अस्य इति समुत्पन्नशीर्षवेदनः = सञ्जातोत्तमाङ्गपीडः। निवेदयामि—अत्र भविष्यत्सामीप्ये लट्। भद्रमुख—भद्रं मुखमस्य इति भद्रमुखः, तत्सम्बुद्धौ भद्रमुख इति। ते रोचते—तुभ्यम् इत्यस्य 'ते मयावेकवचनस्य' इत्यनेन ते इत्यादेशः। अत्र 'रुच्यर्थानां प्रीयमाणः' इत्यनेन चतुर्थी।

मम विमृशतः कार्यारम्भे विधेरविधेयता
सहजकुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम्।
अथ च विहिते मत्कृत्यानां निकाममुपग्रहे
कथमिदमिहेत्युन्निद्रस्य प्रयान्त्यनिशं निशाः ॥ २ ॥

**अन्वयः**—कार्यारम्भे विधेः अविधेयतां विमृशतः कौटिल्यस्य सहजकुटिलां मतिं प्रचिन्तयतः अथ च मत्कृत्यानां निकामम् उपग्रहे विहिते 'इह इदं कथम्' इति अनिशम् उन्निद्रस्य मम निशाः प्रयान्ति ॥ २ ॥

**व्याख्या**—कार्यारम्भे—कृत्योपक्रमे, विधेः—भाग्यस्य, अविधेयतां—स्वातन्त्र्यम् अननुकूलतामिति यावत्, विमृशतः—विचारयतः, कौटिल्यस्य—चाणक्यस्य, सहजकुटिलां—स्वभावक्रूरां, मतिं—बुद्धिं, प्रचिन्तयतः—पर्यालोचयतः,

अथ च—अपि च, मत्कृत्यानां—मम प्रयोगाणाम्, निकामम्—यथेच्छम्, उपग्रहे—प्रतीकारे, विहिते—साधिते, इह—अस्मिन् सुविहिते मत्प्रयोग, इदम्—एतत्, कथं—केन प्रकारेण, इति—अनया रीत्या, अनिशम्—निरन्तरम्, उन्निद्रस्य—जाग्रत , मम—मे, निशा —रात्रय , प्रयान्ति—व्यतियन्ति ॥ २ ॥

हिन्दी अनुवाद—कार्य के आरम्भ मे भाग्य की प्रतिकूलता को सोचते हुए, चाणक्य की स्वाभाविक कुटिल बुद्धि के विषय मे ऊहापोह करते हुए और अपने कार्यों के अत्यन्त विफल हो जाने पर 'यहाँ यह कैसे ( हुआ )' इस चिन्ता मे निरन्तर जागते हुए मेरी रात्रियाँ व्यतीत होती हैं ॥ २ ॥

टिप्पणी—अविधेयताम्—प्रतिकूलता को । वि√धा+यत् कर्मणि= विधेय । न विधेय अविधेय । तस्य भाव । तत्ता, ताम् । मत्कृत्यानाम्—मेरे विषकन्या आदि कपट कार्यों का । उपग्रहे—निरोधे । उप√ग्रह्+अप् भावे=उपग्रह , तस्मिन् । अनिशम्—सतत । अविद्यमाना निशा यस्मिन् कर्मणि तत् यथा तथा । उन्निद्रस्य—उद्गता उच्छिन्ना निद्रा यस्य स उन्निद्र , तस्य । इस श्लोक मे समुच्चय नामक अलङ्कार है, वैदर्भी रीति है और हरिणी छन्द है । इस छन्द का लक्षण ३, ६ मे देखिए ॥ २ ॥

अपि च—

कार्योपक्षेपमादौ तनुमपि रचयंस्तस्य विस्तारमिच्छन्
बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च ।
कुर्वन् बुद्ध्या विमर्शं प्रसृतमपि पुन संहरन् कार्यजातं
कर्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा ॥ ३ ॥

अन्वय —आदौ तनुमपि कार्योपक्षेपं रचयन्, तस्य विस्तारमिच्छन्, गर्भितानां बीजानाम् अतिगहनं फलं गूढमुद्भेदयंश्च बुद्ध्या विमर्शं कुर्वन् प्रसृतम् अपि कार्यजातं पुन संहरन् नाटकानां कर्ता वा अस्मद्विधो वा इमं क्लेशम् अनुभवति ॥३॥

व्याख्या—आदौ—प्रारम्भे, तनुमपि—स्वल्पमपि, कार्योपक्षेपं—कार्यस्य शत्रुपराभवात्मकस्य ग्रन्थस्य उपक्षेप सामाद्युपाय ( नाटककारपक्षे ) बीजन्यास,

रचयन्—प्रणयन् तस्य—कार्यस्य ( पक्षान्तरे ) वीजस्य, विस्तारं—प्रचयम्, इच्छन्—अभिलषन्, गर्भितानां—सञ्जातगर्भाणां फलप्रसवोन्मुखानामित्यर्थः ( पक्षान्तरे ) दृष्टनष्टानां, वीजानां—प्रसरतां प्रयोगानामित्यर्थः ( पक्षान्तरे ) फलप्रधानहेतूनामित्यर्थः, अतिगहनं—दुरनुमेयं, फलं—परिणतिम्, गूढं—गुप्तं यथा स्यात् तथा, उद्भेदयंश्च—प्रकटयंश्च, बुद्ध्या—मत्या, विमर्शं—कर्तव्याकर्तव्यविवेकं ( पक्षान्तरे ) अनुसन्धानं, कुर्वन्—विधदत्, प्रसृतमपि—विस्तृतमपि, कार्यजातं—कृत्यवर्ग ( पक्षान्तरे ) नाटकीयं वस्तु, पुनः—भूयः, संहरन्—संगृह्णांश्च ( पक्षान्तरे ) समापयन् अपि, नाटकानां—रूपकाणां, कर्ता वा—रचयिता च, अस्मद्विधो वा—मादृशश्च राजनीतिप्रयोक्ता जनः, इमं क्लेशं—प्रजागरदुःखम्, अनुभवति—भजते ॥३॥

हिन्दी अनुवाद—और भी—प्रारंभ मे थोड़े भी कार्य के उपाय को ( पक्षान्तर में—वीजन्यास को ) करता हुआ, उस ( कार्य, पक्षान्तर में—बीज) का विस्तार चाहता हुआ, फलोन्मुख ( पक्षान्तर में—दृष्टनष्ट ) बीजों (प्रयोगों, पक्षान्तर में—फल के प्रधान हेतुओं ) के अत्यंत गहन परिणाम को गुप्त रूप से प्रकट करता हुआ, बुद्धि से ( कर्तव्य और अकर्तव्य का ) विवेक ( पक्षान्तर में—अनुसन्धान ) करता हुआ और फैले हुए भी कार्य-समूह ( पक्षान्तर में—नाटकीय कथावस्तु ) को पुनः इकट्ठा ( पक्षान्तर में—समाप्त ) करता हुआ नाटककार और मेरे जैसा ( नीति-प्रयोग-कर्ता ) व्यक्ति इस ( जागरण-रूप ) क्लेश का अनुभव करते है ॥३॥

टिप्पणी—आदौ—प्रारंभ मे, मुख-सन्धि मे। 'यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा। प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम्।' कार्योपक्षेपम्—शत्रुपराजयरूप साम आदि उपाय को। वीजन्यास को। उपक्षिप्यते प्रस्तूयते अनेन इति उप√क्षिप्+घञ् करणे=उपक्षेपः। कार्यस्य उपक्षेपः, तम्। 'काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः'। इस नाटक में चाणक्य के कार्योपक्षेप को प्रथम अंक में 'तन्मयापि तावत्' इत्यादि से किया गया है। तस्य विस्तारम्—कार्य, वीज के विस्तार को। वीज का लक्षण यह है—'स्तोकोद्दिष्टं कार्यहेतुर्बीजं विस्तार्यनेकधा'। गर्भितानाम्—फलोन्मुख, दृष्टनष्ट। गर्भः सञ्जातः एषाम् इति गर्भ+इतच्=गर्भितानि, तेषाम्। 'गर्भस्तु दृष्टनष्टस्य वीजस्यान्वेषणं मुहुः'। यहाँ चाणक्य का कार्योपक्षेप गर्भित है, राक्षस का नहीं। द्वितीय अंक में

ये दोनो बाते देखने को मिलती हैं। उद्भेदयन्—प्रकट करता हुआ। यहाँ फल का प्राकट्य चौथे और पाँचवे अक मे वर्णित हुआ है। विमर्शम्—विवेव, विमर्शसन्धि। वि√मृश्+घञ् भावे=विमर्श। 'यत्र मुख्यफलोपाय, उद्भिन्नो गर्भतोऽधिक। शापाद्यै नान्तरायश्च स विमर्श इति स्मृत ॥' यहाँ हम इसको तीसरे अक के २३वे श्लोक मे देख सकते है। प्रसृतमपि कार्यजातम् पुन सहरन्—फैले हुए भी कार्य-समूह का उपसहार करता हुआ। निर्वहणसन्धि में नाटकीय वस्तु का उपसहार किया जाता है—'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्। ऐकार्थ्यमुपनीयन्ते यत्र निर्वहण हि तत् ॥' यहाँ चाणक्य के कार्य-समूह का उपसहार सप्तम अक के 'भृत्या भद्रभटादय '—इत्यादि श्लोक मे देखा जा सकता है। नाटकानाम्—दृश्य काव्य या रूपक को नाटक कहते हैं। इसका लक्षण यह है—'नाटक ख्यातवृत्त स्यात् पञ्चसन्धिसमन्वितम्'। इम क्लेशम्—इस ( जागरण रूप ) कष्ट का। यहाँ नाटककार ने राजनीतिक नाटक की रचना करने मे होने वाले कष्ट को राक्षस के कथन के द्वारा व्यक्त किया है। जैसे राजनीतिक दाव-पेंच खेलने वाले को कभी-कभी रात-रात भर जागना पड जाता है उसी तरह इस नाटककार को भी प्राय जागना पडा है, ऐसा इस श्लोक से ध्वनित होता है। इस श्लोक मे श्लेषालकार और दीपकालकार मे अगागि-भाव से साकर्य है। इसमे वदर्भी रीति है और स्रग्धरा छन्द है। इस छन्द का लक्षण १, १ मे देखिए ॥३॥

तदपि नाम दुरात्मा चाणक्यवटु,—'

[ उपसृत्य ]

दौवारिक —जेदु जेदु—' ( जयतु जयतु—' )

राक्षस —'अभिसन्धातु शक्य स्यात्।

दौवारिक —अमच्चो। ( अमात्य )।

राक्षस —[ वामाक्षिस्पन्द सूचयित्वात्मगतम् ] 'दुरात्मा चाणक्यवटु-जयति, अभिसन्धातु शक्य स्यादमात्य' इति वागीश्वरी वामाक्षिस्पन्द-नेन प्रस्तावगता प्रतिपादयति। तथापि नोद्यमस्त्याज्य। [ प्रकाशम् ] भद्र! किमसि वक्तुकाम ?

दौवारिक —अमच्च! एसो क्खु करहओ पाडलिपुत्तादो आअदो,

इच्छदि अमच्चं पेक्खिदु। ( अमात्य ! एष खलु करभकः पाटलिपुत्रा-दागतः, इच्छति अमात्यं प्रेक्षितुम्। )

राक्षसः—अवारित प्रवेशयैनम्।

दौवारिकः—जं अमच्चो आणवेदि। [ इति निष्क्रम्य पुरुषमुपसृत्य ] भद्द ! एसो क्खु अमच्चो चिट्ठदि, ता उपसप्प णं। ( यदमात्य आज्ञापयति। भद्र ! एष खलु अमात्यस्तिष्ठति, तदुपसर्प एनम्। )

[ इति निष्क्रान्तो दौवारिकः। ]

**हिन्दी अनुवाद**—तो भी दुष्टात्मा वटुक चाणक्य,'—

[ पास जाकर ]

**द्वारपाल**—जय हो जय हो—'

**राक्षस**—प्रतारणा करने योग्य होता।

**द्वारपाल**—अमात्य।

**राक्षस**—[ बायीं आँख का फड़कना देखकर मन मे ] 'दुष्टात्मा वटुक चाणक्य विजयी हो, अमात्य प्रतारणा करने योग्य होता'—यह दैवी वाणी प्रकरण-प्राप्त होती हुई बायी आँख के फडकने के द्वारा सूचित कर रही है। तो भी उद्यम नही छोडना चाहिए। [ प्रकट ] भद्र ! क्या कहना चाहते हो ?

**द्वारपाल**—अमात्य ! यह करभक पाटलिपुत्र से आया है और आप से मिलना चाहता है।

**राक्षस**—बिना रोक-टोक के उसे प्रविष्ट कराओ।

**द्वारपाल**—जैसी अमात्य की आज्ञा। [ **बाहर जाकर ( उस ) पुरुष के पास पहुँचकर** ] भद्र ! ये अमात्य विराज रहे है, इसलिए उनके पास जाओ।

[ द्वारपाल चला जाता है। ]

**टिप्पणी**—तदपि—यहाँ तात्पर्य यह है कि अमात्य के उस प्रकार क्लेशानुभव करते रहने पर भी दुष्ट चाणक्य उद्यम नही छोड़ता है। उपसृत्य—समीप जाकर। यह तीसरा पताकास्थान है। साहित्यदर्पण में कहा गया है—'अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत्। श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥'

अभिसन्धातुम्—पराभवितुम् प्रतारयितुमित्यर्थ । वामाक्षिस्पन्दम्—वामम् अक्षि, तस्य स्पन्द , तम् । बाईं आंख का फड़कना पुरुष के लिए अशुभ-सूचक है । इसीलिए राक्षस 'तदपि नाम'—इत्यादि अपनी उक्ति के साथ द्वारपाल की उक्ति को जोड़कर 'दुरात्मा चाणक्यवटुर्जयति, अभिसन्धातु शक्य स्यादमात्य,' ऐसा वाक्य पढ़ता है । वागीश्वरी—वाग्देवता । प्रस्तावगता—प्रस्ताव प्रकरण गता प्राप्ता । प्रनिपादयति—कथयति सूचयतीति यावत् ।

करभक —[ राक्षसमुपसृत्य ] जेदु जेदु अमच्चो । जयतु जयत्वमात्य । )

राक्षस —[ नाटयेनावलोक्य ] भद्र करभक ! स्वागतम् । उपविश्यताम् ।

करभक —ज अमच्चो आणवेदि । ( यदमात्य आज्ञापयति । ) [ इति भूमावुपविशति । ]

राक्षस —[ आत्मगतम् ] अथ कस्मिन् प्रयोजने मयाऽय प्रणिधि प्रहित इति प्रभूतत्वात् प्रयोजनाना न खल्ववधारयामि । [ इति चिन्ता नाटयति । ]

[ तत प्रविशति वेत्रपाणिरपर पुरुष । ]

पुरुष —ओसलध अज्जा ! ओसलध । अवेध माणहे ! अवेध । किं ण पेक्खह ? । ( अपसरत आर्या ! अपसरत । अपेत मान्या ! अपेत । किं न पश्यथ ? )

दूले पच्चासत्ती दसणमवि दुल्लहं अधण्णेहिं ।
कल्लाणकुलहराण देवाण ज मनुस्सदेआण ॥ ४ ॥
(दूरे प्रत्यासत्तिर्दर्शनमपि दुर्लभमधन्यै
कल्याणकुलधराणा देवानाञ्च मनुष्यदेवानाम् ॥ ४ ॥ )

अन्वय —कल्याणकुलधराणा देवाना मनुष्यदेवाना च दर्शनमपि अधन्यै दुर्लभम्, प्रत्यासत्ति दूरे ॥ ४ ॥

व्याख्या—कल्याणकुलधराणा—( देवपक्षे ) कल्याण स्वर्णमय कुलधर-कुलपर्वत मेरु येषा तादृशाना ( राजपक्षे कल्याणाना कुल कल्याणकुल,

धरन्तीति धराः, कल्याणकुलस्य धराः कल्याणकुलधराः तेषां कल्याणकुलधराणां मङ्गलसमूहभाजिनां) देवानां—सुराणां, मनुष्यदेवानां च—मनुष्याणां मनुष्येषु वा देवाः देवतुल्याः मनुष्यदेवाः तेषां मनुष्यदेवानां राज्ञां च, दर्शनमपि—अवलोकनञ्च, अधन्यैः—हतभाग्यैः पुरुषैः, दुर्लभम्—दुष्प्रापम्, प्रत्यासत्तिः—सामीप्यप्राप्तिः, दूरे ( तिष्ठतु ) ॥ ४ ॥

हिन्दी अनुवाद—करभक—[ राक्षस के पास पहुँचकर ] अमात्य की जय हो, जय हो ।

राक्षस—[ अभिनयपूर्वक देखकर ] भद्र करभक ! स्वागत है । बैठो ।

करभक—अमात्य की जो आज्ञा । [ भूमि पर बैठ जाता है । ]

राक्षस—[ मन में ] अच्छा, किस काम में इस गुप्तचर को भेजा था, वह कार्यों की अधिकता के कारण निश्चित नहीं कर पा रहा हूँ । [ सोचने का अभिनय करता है । ]

[ तब हाथ में बेंत लिये दूसरा पुरुष प्रवेश करता है । ]

पुरुष—हटो आर्यो ! हटो । दूर हो जाओ मान्यो ! दूर हो जाओ । क्या नहीं देखते हो ?

सोने के मेरुपर्वत पर निवास करने वाले ( राजा के पक्ष में कल्याणसमूह का धारण करने वाले ) देवताओं और राजाओं के दर्शन भी भाग्यहीनों के लिए दुर्लभ हैं, सामीप्य प्राप्त करना तो दूर रहा ॥ ४ ॥

टिप्पणी—कस्मिन् प्रयोजने—किं प्रयोजनमुद्दिश्येत्यर्थः । विषयाधिकरणे सप्तमी । प्रहितः—प्र√हि ( प्रेरणे ) + क्त कर्मणि । वेत्रपाणिः—वेत्रं पाणौ यस्य सः बहुव्रीहि स०, 'प्रहरणार्थेभ्यः परा निष्ठा' इति पाणिशब्दस्य परनिपातः । अधन्यैः—अत्र 'न लोकाव्यय'—इति खलर्थयोगे षष्ठीप्रतिषेधः । प्रत्यासत्तिः—समीप में जाना या रहना । प्रति—आ√सद् + क्तिन् भावे । अत्र उपसर्गवशात् धातोः सकर्मकत्वम् ।

[ आकाशे ] अज्जा ! किं भणाध, किं णिमित्तं एसा ओसालणा करीअदि ? अज्जा ! एसो क्खु कुमालो मलयकेदू समुप्पण्णसीसवेअणं अमच्चरक्खसं पेक्खिदुं इह ज्जेव आअच्छदि । एदिणा कालणेण

ओसालणा करीअदि। (आर्या ! किं भणथ, किं निमित्तमेषाऽपसारणा क्रियते ? आर्या ! एष खलु कुमारो मलयकेतुः समुत्पन्नशीर्षवेदनममात्य-राक्षसं प्रेक्षितुमिहैवागच्छति। एतेन कारणेनापसारणा क्रियते।)

[ इति निष्क्रान्तः पुरुषः। ]

[ ततः प्रविशति भागुरायणेन कञ्चुकिना चाऽनुगम्यमानो मलय-केतुः। ]

मलयकेतुः—[ निःश्वस्यात्मगतम् ] अद्य दशमो मासस्तातस्योपर-तस्य। न चास्माभिर्वृथा पुरुषकारमुद्वहद्भिस्तमुद्दिश्य तोयाञ्जलिरप्याव-र्जितः। अथवा, प्रतिज्ञातमेतत् पुरस्तात्।

वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्तनादकरुणं भूरेणुरूक्षालकम्।
तादृड्मातृजनस्य शोकजनितं सम्प्रत्यवस्थान्तरं
शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः ॥ ५ ॥

अन्वयः—मातृजनस्य शोकजनितं वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयां-शुकं भूरेणुरूक्षालकं हाहेत्युच्चरितार्तनादकरुणं तादृक् अवस्थान्तरं सम्प्रति शत्रुस्त्रीषु विधाय मया गुरवे निवापाञ्जलिः देयः ॥ ५ ॥

व्याख्या—मातृजनस्य—मातॄणां जननीनां जनस्य समूहस्य, शोकजनितं—शोकेन भर्तृवियोगदुःखेन जनितं समुत्पन्नं, वक्षस्ताडनभिन्नरत्नवलयं—वक्षस उरसः यानि ताडनानि आघाताः तैः भिन्नानि भग्नानि रत्नवलयानि मणिनिर्मित-कटकानि यस्मिन् तादृशम्, भ्रष्टोत्तरीयांशुकं—भ्रष्टं स्वस्थानाच्च्युतमुत्तरीयांशुक-मुत्तरीयवस्त्रं यस्मिन् तादृशं, भूरेणुरूक्षालकं—भुवः भूम्याः रेणवः धूलयः ताभिः रूक्षाः अस्निग्धाः अलकाः चूर्णकुन्तलाः यस्मिन् तादृशम्, हाहेत्युच्चरितार्तनादक-रुणं—हा हा इति अनेन प्रकारेण उच्चरितः उद्गतः यः आर्तनादः दीनस्वरः तेन करुणं हृदयविदारणं, तादृक्—तथाविधम्, अवस्थान्तरं—दशान्तरं, सम्प्रति—अधुना, शत्रुस्त्रीषु—अरिवधूषु, विधाय—कृत्वा, मया—मलयकेतुना, गुरवे—पित्रे निवापाञ्जलिः—निवापस्य पितृदानस्य अञ्जलिमितं जलम्, देयः—समर्पणीयः ॥५॥

**हिन्दी अनुवाद**—[ आकाश में ] आर्यगण ? क्या कह रहे हो, किस कारण ( लोगों को ) हटाया जा रहा है ? आर्यवृन्द ! ये कुमार मलयकेतु उत्पन्न शिरोवेदना वाले अमात्य राक्षस को देखने के लिए यहीं आ रहे हैं। इस कारण हटाया जा रहा है।

[ पुरुष निकल जाता है। ]

**[ तब भागुरायण और कंचुकी से अनुसरण किया जाता हुआ मलयकेतु प्रवेश करता है। ]**

**मलयकेतु**—[ **साँस खींचकर मन में** ] पिताजी को मरे आज दसवाँ महीना है। व्यर्थ में पुरुषत्व को ढोते हुए हमने उनके उद्देश्य से जलांजलि भी अर्पित नहीं की। अथवा पहले यह प्रतिज्ञा की थी—

माताओं के शोक से उत्पन्न छाती पीटने के कारण टूटे हुए रत्न-कंकणों वाली, गिरे हुए उत्तरीय वस्त्र वाली, धरती की धूलों से रूखे बालों वाली और हाय-हाय इस प्रकार उच्चारण किये गये दीनस्वर के कारण हृदयविदारक—ऐसी भिन्न दशा ( अर्थात् दुर्दशा ) को वैरियों की स्त्रियो ( के भाग्य ) में ( बदल ) करके मुझे पिता का श्राद्ध-तर्पण करना है ॥५॥

**टिप्पणी**—अपसारणा—हटाना। अप√सृ+णिच्+युच्—अन, टाप्। समुत्पन्नशीर्षवेदनम्—समुत्पन्ना सञ्जाता शीर्षे शिरसि वेदना पीड़ा यस्य सः समुत्पन्नशीर्षवेदनः त्रिपदव्यधिकरणबहुव्रीहि स०, तम्। उपरतस्य—मृतस्य। तातस्य—अत्र शेषे षष्ठी। तातस्य सम्बन्धे इत्यर्थः। दशमः—दशानां पूरणः इति दशन्+डट्, तस्य मडागमः। तोयाञ्जलिः तोयस्य अञ्जलिः अञ्जलिमितं जलमित्यर्थः। आवर्जितः—दत्तः। आ√वृज्+णिच्+क्त कर्मणि। अलक—सिर के बाल, केशपाश। तादृक्—तद्√दृश्+क्विन् कर्त्तरि। अवस्थान्तरम्—अन्या अवस्था अवस्थान्तरम् मयूरव्यंसकादित्वात् नित्यसमासः। निवापाञ्जलिः—श्राद्धतर्पणमित्यर्थः। इस श्लोक में असम्भवद्वस्तुसम्बन्धरूप निदर्शना अलंकार है। इसमें शार्दूलविक्रीडित छन्द है। इस छन्द का लक्षण १, १२ में देखिए ॥५॥

तत् किमिह बहुना ?

उद्यच्छता धुरमकापुरुषानुरूपां।
गन्तव्यमाजिनिधनेन पितुः पथा वा।

आच्छिद्य वा स्वजननीजनलोचनेभ्यो
नेयो मया रिपुवधूनयनानि वाष्पः ॥ ६ ॥

अन्वय —अकापुरुषानुरूपां धुरम् उद्वच्छता मया पितुः पथा वा आजिनिधनेन गन्तव्यम्, वाष्पो वा स्वजननीजनलोचनेभ्यः आच्छिद्य रिपुवधूनयनानि नेयः ॥६॥

व्याख्या—अकापुरुषानुरूपाम्—अकापुरुषस्य वीरस्य अनुरूपां योग्या, धुरं—भारम्, उद्वच्छता—वहता, मया, पितुः—जनकस्य, पथा—मार्गेण, वा—अथवा, आजिनिधनेन—आजौ संग्रामे निधनं मरणं तेन, गन्तव्यं—प्रस्थातव्यम्, वाष्पो वा—नेत्रजलं वा, स्वजननीजनलोचनेभ्यः—स्वस्य आत्मनः जननीजनस्य मातृसमूहस्य लोचनेभ्यः नेत्रेभ्यः, आच्छिद्य—गृहीत्वा, रिपुवधूनयनानि—शत्रुस्त्रीनेत्राणि, नेयः—प्रापणीयः ॥ ६ ॥

हिन्दी अनुवाद—इसलिए इस विषय में बहुत कहने से क्या ( लाभ ) ?
वीर पुरुष के योग्य भार का वहन करते हुए मुझे पिता के मार्ग से या संग्राम में मृत्यु के द्वारा जाना चाहिए अथवा अपनी माताओं की आँखों से छीनकर शत्रु-वनिताओं की आँखों में आँसू को पहुँचा देना चाहिए ॥ ६ ॥

टिप्पणी—अकापुरुषानुरूपाम्—रूपम् अनुगता अनुरूपा । कुत्सित पुरुषः कापुरुष वा कुपुरुष 'विभाषा पुरुषे' इत्यनेन कादेशस्य विकल्पात् । न कापुरुषः अकापुरुषः विरोधार्थे नञ्समासः । तस्य अनुरूपा, ताम् । उद्वच्छता—वहन करते हुए । उद्√यम्+शतृ । अत्र 'समुदाङ्भ्योऽयमोऽग्रन्थे' इत्यनेन आत्मनेपदस्य दुर्वारत्वेऽपि 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनेन परस्मैपदम् । वा—विकल्पार्थक अव्यय । स्वजननीजनलोचनेभ्यः—अत्र 'ध्रुवमपायेऽपादानम्' इत्यनेन पञ्चमी । इस श्लोक में विकल्प अलंकार है और वसन्ततिलका छन्द है । इस छन्द का लक्षण १, ८ में देखिए ॥ ६ ॥

[ प्रकाशम् ] आर्य जाजले । उच्यन्तामस्मद्वचनादनुयायिनो राजानः —'एक एवाहममात्यराक्षसस्यातर्कितागमनेन प्रीतिमुत्पादयितुमिच्छामि, अतः कृतमनुगमनक्लेशेने' ति ।

कञ्चुकी—यदाज्ञापयति कुमारः । [परिक्रम्याकाशे] भो भो राजानः ! कुमारः समाज्ञापयति—'न खल्वहं केनचिदनुगन्तव्य' इति । [ विलोक्य

सहर्षम् ] कुमार ! कुमार ! एते भवदाज्ञासमनन्तरमेव प्रतिनिवृत्ताः सर्व एव राजानः । पश्यतु कुमारः—

सोत्सेधैः स्कन्धदेशैः खरतरकविकाकर्षणात्यर्थभुग्नै-
रश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात् ।
केचिन्मातङ्गमुख्यैर्विहृतजवतया मूकघण्टैर्निवृत्ताः
मर्यादां भूमिपाला जलधय इव ते देव नोल्लङ्घयन्ति ।। ७ ।।

अन्वयः—कैश्चित् खुरपुटैः पुरस्तात् खं खण्डयन्तः इव अश्वाः खरतरकविकाकर्षणात्यर्थभुग्नैः सोत्सेधैः स्कन्धदेशैः निरुद्धाः । केचित् विहृतजवतया मूकघण्टैः मातङ्गमुख्यैः निवृत्ताः । देव ! जलधय इव भूमिपालाः ते मर्यादां न उल्लङ्घयन्ति ।। ७ ।।

व्याख्या—कैश्चित्—भूपालैः, खुरपुटैः—शफाग्रभागैः, पुरस्तात्—अग्रे, खम्—आकाशम्, खण्डयन्तः इव—चूर्णयन्तः इव, अश्वाः—घोटकाः, खरतरकविकाकर्षणात्यर्थभुग्नैः—खरतराः अतितीक्ष्णाः याः कविकाः खलीनाः तासां कर्षणैः सग्रहैः अत्यर्थम् अतिशयम् भुग्नैः कुटिलैः, सोत्सेधैः—उन्नतैः, स्कन्धदेशैः—ग्रीवाप्रदेशैः, निरुद्धाः—अवरुद्धाः । केचित्—इतरे राजानः, विहृतजवतया—विहृतः निरुद्धः जवः वेगः येषां तथाविधतया, मूकघण्टैः—मूकाः निःशब्दाः घण्टाः गलघण्टाः, येषां तैः, मातङ्गमुख्यैः—गजेन्द्रैः, निवृत्ताः—गमनविरताः । देव !—महाराज !, जलधय इव—समुद्रा इव, भूमिपालाः—नृपाः, ते—तव, मर्यादाम्—आज्ञां ( समुद्रपक्षे वेलां ), न उल्लङ्घयन्ति—न अतिक्रामन्ति ।। ७ ।।

हिन्दी अनुवाद—[ प्रकट ] आर्य जाजलि ! हमारी ओर से अनुगमन करने वाले राजाओ से कहो कि मैं अकेला ही अमात्य राक्षस के पास सहसा उपस्थित होकर प्रीति को उत्पन्न करना चाहता हूँ। इसलिए पीछे-पीछे चलने का कष्ट करना व्यर्थ है।

कञ्चुकी—कुमार की जो आज्ञा । [ घूमकर आकाश में ] हे राजवृन्द ! कुमार आज्ञा देते है कि मेरे पीछे-पीछे कोई न आवे [ देखकर हर्षपूर्वक ] कुमार ! कुमार ! ये सभी राजा लोग आपकी आज्ञा पाते ही लौट गए । कुमार देखे—

कुछ राजाओं ने खुरो के अग्रभागो से सामने आकाश को मानों चूर्ण करते

हुए तथा अत्यत तीक्ष्ण लगामो के खीचने से अत्यधिक टेढ और (इसीलिए) समुन्नत हो उठने वाले ग्रीवाभागो से युक्त अश्वो को रोक लिया। कतिपय राजगण वेग के रोक देने के कारण नि शब्द घटे वाले गजराजो के साथ लौट पड़। महाराज ! समुद्र के समान राजा लोग आपकी आज्ञा का उल्लघन नही करते हैं ॥ ७ ॥

टिप्पणी—अतर्कितागमनेन—सहसोपस्थित्या। √तर्क् + णिच् स्वार्थे + क्त कर्मणि = तर्कितम् न तर्कितम् नञ्तत्० । तादृश गमनम् कर्मधारय स०, तन । कृतम्—अलम्। अस्य योगे 'अनुगमनक्लेशेन' इत्यत्र तृतीया। पुरस्तात्—अव्ययमेतत्। पूर्वस्मिन् देशे इति पूर्व + टि—अस्तानि स्वार्थे। अतिशयेन खरम् इति खरतरम्। √भुज् + क्त कर्त्तरि = भुग्न। सोत्सेधै —उद् √सिध् + घञ् भावे = उत्सेध. = उच्छ्राय। तेन सह इति सोत्सेधा, तै.। स्कन्धदेशैः —अत्र इत्यम्भूतलक्षणे तृतीया। निरुद्धा —नि √रुध् + क्त कर्मणि। मातङ्गमुख्यै — मातङ्गाना मुख्या षष्ठीतत्० वा मातङ्गेषु मुख्या सुप्सुपा स०, तै । निवृत्ता— नि √वृत् + क्त कर्तरि। भूमिपाला —भूमि पालयन्ति इति भूमि √पाल् + णिच् + अण् कर्तरि। इस श्लोक मे स्वभावोक्ति अलकार, उत्प्रेक्षा और उपमा अलकारो से ससृष्ट है। इसमे स्रग्धरा छन्द है। इस छद का लक्षण १, १ में देखिए ॥७॥

मलयकेतु —आर्य जाजले ! त्वमपि सपरिजनो निवर्तस्व। भागुरायण एको मामनुगच्छतु।

कचुकी—यदाज्ञापयति कुमार ।

[ इति सपरिजनो निष्क्रान्त ]

मलयकेतु —सखे भागुरायण ! विज्ञापितोऽहमिहागच्छद्भिर्भद्रभटप्रभृतिभि , यथा—'न वयममात्यराक्षसद्वारेण कुमारमाश्रयणीयमाश्रयामहे, किन्तु कुमारस्य सेनापति शिखरसेनमुरीकृत्य दुष्टामात्यपरिगृहीतात् चन्द्रगुप्तादपरक्ता सन्त कुमारमाभिरामिकगुणयोगादाश्रयणीयमाश्रयामह' इति। तन्मया सुचिरमपि विचारयता तेषा न वाक्यार्थोऽधिगत ।

भागुरायण —कुमार ! नायमत्यन्तदुर्बोधोऽर्थ । पश्य, विजिगीषुमात्मगुणसम्पन्न प्रियहितद्वारेणाश्रयणीयमाश्रयेदि' ति ननु न्याय्य एवायम्।

**मलयकेतुः**—सखे भागुरायण ! नन्वस्माकममात्यराक्षसः प्रियतमो हिततमश्च ।

**हिन्दी अनुवाद—मलयकेतु**—आर्य जाजलि ! तुम भी परिजनों के साथ लौट जाओ । अकेला भागुरायण मेरे पीछे-पीछे आवे ।

**कंचुकी**—कुमार की जो आज्ञा ।

[ अनुचरों के साथ चला जाता है । ]

**मलयकेतु**—मित्र भागुरायण ! यहाँ आये हुए भद्रभट आदियो ने मुझसे कहा कि हम लोग अमात्य राक्षस के द्वारा आश्रय के योग्य कुमार का आश्रय नही ले रहे है, किन्तु कुमार के सेनापति शिखरसेन ( की बातों ) को स्वीकार करके दुष्ट अमात्य चाणक्य के वशीभूत चन्द्रगुप्त से विरक्त होकर उत्तम गुणों से विभूषित होने के कारण कुमार का आश्रय ले रहे है । सो मैने चिरकाल तक सोचने पर भी उनके वाक्य का तात्पर्य नही समझा ।

**भागुरायण**—कुमार ! यह तात्पर्य दुर्बोध नहीं है । देखिए, जीतने के इच्छुक, आतमा के गुणों ( पराक्रम, उत्साह आदि ) से सम्पन्न और आश्रय के योग्य का आश्रय प्रिय एवं हितचिन्तक व्यक्ति के द्वारा ग्रहण करना चाहिए ।

**मलयकेतु**—मित्र भागुरायण ! आमात्य राक्षस तो हमारे अत्यन्त प्रिय एवम् अत्यन्त हितचिन्तक हैं ।

**टिप्पणी**—विज्ञापितः—निवेदितः । आमात्यराक्षसद्वारेण—अमात्य-राक्षस एव द्वारम्, तेन, करणे तृतीया । आश्रयणीयम्—सेवनीयम् । आश्रयामहे—सेवामहे । ऊरीकृत्य—स्वीकृत्य । ऊरी√कृ+क्त्वा—ल्यप्, 'ऊर्यादिच्विडाचश्च' इत्यनेन गतिसंज्ञा, 'कुगतिप्रादयः' इत्यनेन गतिसमासः । आभिरामिकगुणयोगात्—प्रशस्तगुणभूषितत्वात् । अभि समन्तात् रमयति इति अभि √रम्+णिच्+अच् कर्तरि=अभिरामम् । तत् शीलमस्य इति अभिराम+ठक्—इक=आभिरामिकम् । तस्य गुणाः । तैः योगः, तस्मात् । हेतौ पञ्चमी । विजिगीषुम्—विजयाभिलाषिणम् । विजेतुम् इच्छुः विजिगीषुः वि√जि+सन्, द्वित्वादि+उ, तम् । प्रियहितद्वारेण—प्रियश्चासौ हितः प्रियहितः । स एव द्वारम् उपायः, तेन ।

भागुरायण —कुमार ! एवमेतत्, किन्तु अमात्यराक्षसश्चाणक्ये बद्धवैरो न तु चन्द्रगुप्ते,तद्यदि कदाचिच्चन्द्रगुप्तश्चाणक्यमतिजितकाशिनमसहमान साचिव्यादवरोपयेत्, ततो नन्दकुलभक्त्या नन्दान्वय एवायमिति कृत्वा, सुहृज्जनापेक्षया च, अमात्यराक्षसश्चन्द्रगुप्तेन सह सन्दधीत । चन्द्रगुप्तोऽपि पितृपारम्पर्यागत एवायमिति गत्वा सन्धिमनुमन्येत । एव सत्यस्मास्वपि कुमारो न विश्वसेदित्ययमेषा वाक्यार्थ ।

मलयकेतु —युज्यते । सखे भागुरायण ! अमात्यराक्षसस्य गृहमार्ग मादेशय ।

भागुरायण —इत इत कुमार । [इत्युभौ परिक्रामत ।] कुमार ! इदमात्यराक्षसस्य गृह, प्रविशतु कुमार ।

मयलकेतु —एप प्रविशामि । [इत्युभौ प्रवेशन नाटयत । ]

राक्षस —[आत्मगतम्] आ स्मृतम् ।' [प्रकाशम्-] भद्र ! अपि दृष्टस्त्वया कुसुमपुरे वैतालिक स्तनकलस ?

करभक —अमच्च ! अव इ ? (अमात्य ! अथ किम् ?)

मलयकेतु —सखे भागुरायण ! कुसुमपुरवृत्तान्त प्रस्तूयते । तन्नोपसर्पाव , शृणुवस्तावत्—

> सत्त्वभङ्गभयाद्राज्ञा कथयन्त्यन्यथा पुर ।
> अन्यथा विवृतार्थपु स्वैरालापेषु मन्त्रिण ॥८॥

अन्वय —मन्त्रिण राज्ञा पुर सत्त्वभङ्गभयात् अन्यथा कथयन्ति, विवृतार्थेपु स्वैरालापेषु अन्यथा ॥८॥

व्याख्या—मन्त्रिण —अमात्या , राज्ञा—नृपाणा, पुर —अग्रे, सत्त्वभङ्गभयात्—सत्त्वस्य मनस प्रभावस्य वा भङ्ग नाश तस्य भयात् भीत्या, अन्यथा—प्रकारान्तरेण, कथयन्ति—वदन्ति, विवृतार्थेपु—विवृत प्रकटीकृत अर्थ तात्पर्यं येषु ताहशेपु, स्वैरालापेषु—स्वच्छन्दभाषणेषु, अन्यथा—अन्यप्रकारेण (कथयन्ति) ॥८॥

हिन्दी अनुवाद—भागुरायण—कुमार ! यह ऐसा ही है । किन्तु अमात्य राक्षस का वैर चाणक्य से बँधा हुआ है न कि चन्द्रगुप्त से, इसलिए यदि

कदाचित् अत्यन्त अभिमानी चाणक्य को सहन न करता हुआ चन्द्रगुप्त (उसे) मन्त्रि-पद से च्युत कर दे, तदनन्तर नन्द-वंश की भक्ति के कारण यह नन्द-वंश का ही है—यह समझकर तथा (चन्दनदास आदि) मित्रों की अपेक्षा के कारण अमात्य राक्षस चन्द्रगुप्त के साथ सन्धि कर ले, और चन्द्रगुप्त भी पितृ-परम्परा से आया हुआ ही यह है—यह सोचकर सन्धि का अनुमोदन करे तो ऐसी स्थिति में हम लोगों पर भी कुमार विश्वास न करें—यह इनके वाक्य का तात्पर्य है।

**मलयकेतु**—ठीक है। मित्र भागुरायण! अमात्य राक्षस के घर का मार्ग बताओ।

**भागुरायण**—इधर से कुमार (आवें) इधर से। [दोनों घूम जाते हैं।] कुमार! यह अमात्य राक्षस का घर है, कुमार प्रवेश करें।

**मलयकेतु**—यह प्रवेश करता हूँ। [दोनों प्रवेश करने का अभिनय करते हैं।]

**राक्षस**—[मन में] ओह! स्मरण आ गया। [प्रकट] भद्र! क्या तुम कुसुमपुर में वैतालिक स्तनकलस से मिले थे?

**करभक**—अमात्य! और क्या?

**मलयकेतु**—मित्र भागुरायण! कुसुमपुर का वृत्तान्त चल रहा है। इसलिए हम दोनों समीप नहीं जाते, (यहीं से) तब तक सुनते हैं—

मंत्री लोग प्रभाव के नष्ट हो जाने के भय से राजाओं के सामने (किसी बात को) दूसरे ढंग से कहते है और प्रकट तात्पर्य वाली स्वच्छन्द बातचीतों में अन्य प्रकार से (कहते हैं) ॥८॥

**टिप्पणी**—एवमेतत्, किन्तु—भागुरायण चाणक्य का गुप्तचर है। वह राक्षस और मलयकेतु में फूट डालना चाहता है। फूट या भेद का लक्षण यह है—'स्नेहापरागानयनं संघर्षोत्पादनं तथा। संतर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः॥' यहाँ भागुरायण ने 'स्नेहापरागानयन' भेद का प्रयोग किया है। **बद्धवैरः**—धृतविद्वेषः। बद्धं वैरं येन स बद्धवैरः। **अतिजितकाशिनम्**—अनल्पमदशालिनम्। अतिजितेन अतिजयेन काशते तच्छीलः इति अतिजित✓

काश्+णिनि कर्तरि ताच्छील्ये=अतिजितकाशी, तम् । साचिव्यात्—मन्त्रिपदात् । अवरोपयेत्—च्यावयेत् । अव√रुह्+णिच्, हृस्य प +लिङ्—यात् । नन्दकुलभक्त्या राक्षस नन्दवंश के भक्त हैं और चन्द्रगुप्त नन्द का पुत्र है, इसलिए संभव है कि राक्षस चन्द्रगुप्त के प्रति आकृष्ट हो जायँ। सुहृज्जनापेक्षया—अत्र हेतौ तृतीया। राक्षस के मित्र चन्दनदास सपरिवार कारागार मे हैं और भी उनके कतिपय मित्र संकट मे हैं। इसलिए चन्द्रगुप्त से उनका संधि कर लेना कोई आश्चर्य की बात नही है। सन्दधीत—सन्धिं कुर्यात्। यदि अपसारयेत् तदा सन्दधीत इति विवक्षाया हेतुहेतुमद्भावात् लिङ्। सन्धिम्—सम्√धा+कि भावे=सन्धि, तम्। विश्वसेत्—वि√श्वस्+लिङ्—यात्। अत्र सम्भावनायां लिङ्। श्वस् धातु अदादिगणीय है। इसलिए, यहाँ 'विश्वस्यात्' रूप होना चाहिए, किन्तु 'गणकार्यमनित्यम्' इस नियम के बल से यहाँ अदादिगणीय कार्य न होकर भ्वादिगणीय कार्य हुआ। युज्यते—√युज् ( दिवादि )+लट्—ते कर्तरि। शृणुमस्तावत्—भागुरायण ने मलयकेतु के मन में राक्षस के प्रति सन्देह का अंकुर उत्पन्न कर दिया है, इसलिए वह छिपकर राक्षस की बातचीत सुनना चाहता है। स्वैरालापेषु—आ√लप्+घञ् भावे=आलापा। स्वैरा आलापा कर्मधारय स०, तेषु। इस श्लोक मे काव्यलिंग अलंकार है और अनुष्टुप् छन्द है। इसका लक्षण १, ३ में देखिए ॥ ८ ॥

भागुरायण —यदाज्ञापयति कुमार ।

राक्षस —भद्र ! अपि तत् कार्यं सिद्धम् ?

करभक —अमच्चस्स प्पसाएण सिद्धम् । ( अमात्यस्य प्रसादेन सिद्धम् । )

मलयकेतु —सखे भागुरायण ! किं तत् कार्यम् ?

भागुरायण —कुमार ! गहनः खलु सचिववृत्तान्तो नैतावता परिच्छेत्तुं शक्यते । अवहितस्तावच्छृणु ।

राक्षस —विस्तरेण श्रोतुमिच्छामि ।

करभक —सुणादु अमच्चो, अत्थि दाव अहं अमच्चेणाणत्तो, जधा—

'करभअ ! कुसुमपुरे गच्छिअ भणिदव्बो मम वअणेण तुए वैआलिओ त्थणकलसो, जधा—'चाणक्कहदएण तेसु तेसुं अण्णाभङ्गेसुं अणुचिट्ठीअमाणेसुं चन्दउत्तो समुत्तेअणसमत्थेहिं सिलोएहिं उबसिलोअइदब्बो' त्ति। ( शृणोत्वमात्यः, अस्ति तावदहममात्येनाज्ञप्तो यथा—'करभक ! कुसुमपुरं गत्वा मम वचनेन त्वया भणितव्यो वतालिकः स्तनकलसः, यथा—'चाणक्यहतकेन तेषु तेषु आज्ञाभङ्गेषु अनुष्ठीयमानेषु चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः' इति । )

राक्षसः—ततस्ततः ?

करभकः—तदो मए पाडलिउत्तं गच्छिअ सुणाविदो अमच्चस्स सन्देसं वैआलिओ त्थणकलसो । (ततो मया पाटलिपुत्रं गत्वा श्रावितोऽमात्यस्य सन्देशं वैतालिकः स्तनकलसः ।)

राक्षसः—ततस्ततः ?

करभकः—एत्थन्तरे णन्दकुलविणासदुम्मणस्स पोरजणस्स परिओसं सम्मुप्पाअन्तेण चन्दउत्तेण आघोसिदो कुसुमउरे कौमुदीमहोसबो । सोबि चिरआलपबत्तमाणो जणिदपरिओसो अहिमदबन्धुजणसमागमो बिअ, ससिणेहं बहुमाणिदो णअरजणेण । (अत्रान्तरे नन्दकुलविनाशदुर्मनसः पौरजनस्य परितोषं समुत्पादयता चन्द्रगुप्तेनाघोषितः कुसुमपुरे कौमुदीमहोत्सवः । सोऽपि चिरकालप्रर्वतमानो जनितपरितोषः अभिमतबन्धुजनसमागम इव सस्नेहं बहुमानितो नगरजनेन ।)

**हिन्दी अनुवाद—भागुरायण**—कुमार की जो आज्ञा ।

**राक्षस**—भद्र ! क्या वह कार्य सिद्ध हुआ ?

**करभक**—अमात्य की कृपा से सिद्ध हो गया ।

**मलयकेतु**—मित्र भागुरायण ! वह कौन कार्य है ?

**भागुरायण**—कुमार ! दुर्ज्ञेय अमात्य का वृत्तान्त इतने से निश्चित नहीं किया जा सकता ।

**राक्षस**—विस्तार से सुनना चाहता हूँ ।

**करभक**—अमात्य सुनें । आपने मुझे आज्ञा दी थी कि—करभक ! कुसुमपुर

